पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

श्रीजगन्नाथयतिविरचितभाष्यदीपिका-सूत्रदीपिकासहितम्

(चतुर्थाध्यायः)

सम्पादकः
विद्वान् पि.वि. उपाध्यायः
ग्रन्थपालकः , पूर्णप्रज्ञसंशोधनमन्दिरम् बेङ्गलूरु - २८

प्रकाशनम्
पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२००९

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

श्रीजगन्नाथयतिविरचितभाष्यदीपिका-सूत्रदीपिकासहितम्

(चतुर्थाध्यायः)

सम्पादकः

विद्वान् पि. वि. उपाध्यायः

ग्रन्थपालकः , पूर्णप्रज्ञसंशोधनमन्दिरम् बेङ्गलूरु - २८

प्रकाशनम्

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२००९

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला – ६३

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम् **श्रीमद्ब्रह्मसूत्रभाष्यम्**
श्रीजगन्नाथयतिविरचितभाष्यदीपिका-सूत्रदीपिकासहितम् (चतुर्थाध्यायः)

सम्पादकः
विद्वान् पि.वि. उपाध्यायः
ग्रन्थपालकः, पूर्णप्रज्ञसंशोधनमन्दिरम् वेङ्गलूरु - २८

*This Publication is brought out by the generous financial help of*

**Rashtriya Sanskrit Samsthan, (Deemed University ), New Delhi**

प्रकाशनम् -
पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पा मेन्रोड्, वेङ्गलूरु - २८

| | |
|---|---|
| पुटानि | : ४७ + १९० |
| प्रथममुद्रणम् | : २००९ |
| मुद्रितपुस्तकसङ्ख्या | : १००० |
| मूल्यम् | : १०० रूप्यकाणि |
| मुद्रणालयः | : वृन्दावन मुद्रणालयः, वेङ्गलूरु |

POORNAPRAJNA SAMSHODHANA MANDIRAM

Recognised by Rashtriya Sanskrit Samsthan, (Deemed University)
Ministry of H.R.D., Govt. of India, New Delhi

# ŚRIMAD BRAHMASŪTRA BHĀṢYAM

of

**Sri Madhwacharya**

with Bhashyadeepika and Sutradeepika of

**Sri Jagannathayati**

**(Chapter IV)**

Editor :

**Vidwan P.V. Upadhyaya**

Curator, Poornaprajna Samshodhana Mandiram,
Bangalore-28

**Publisher :**

Poornaprajna Samshodhana Mandiram,
Poornaprajna Vidyapeetha, Bangalore -560 028

**2009**

Poornaprajna Samshodhana Mandiram Series No. 63

# ŚRIMAD BRAHMASŪTRA BHĀṢYAM (Chapter IV)

of Sri Madhwacharya with Bhashyadeepika and Sutradeepika
of Sri Jagannathayati.

Editor :
**Vidwan P.V. Upadhyaya**
Curator, Poornaprajna Samshodhana Mandiram,
Bangalore-28

Published by :

**Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Katriguppa Main Road,
Bangalore -560 028

*This Publication is brought out by the generous financial help of*

**Rashtriya Sanskrit Samsthan,
(Deemed University ),
New Delhi**

| | |
|---|---|
| Pages | : 47+190 |
| First Edition | : 2009 |
| Copies | : 1000 |
| Price | : 100/- |
| Printed by | : Brindavana Printers, Bangalore |

# अनुग्रहसन्देशः

वेदार्थनिर्णायकन्यायग्रथनात्मकानि हि ब्रह्मसूत्राणि भगवद्-बादरायणप्रणीतानि नैकभाष्योपजीवकानि विद्वत्प्रवरैः सन्ततम् अध्ययन-योग्यानि विराजन्तेतमाम् । तदेतेषां ब्रह्ममीमांसासूत्राणां भाष्याणि नैकाचार्यप्रणीतानि दृश्यन्ते । तत्र श्रीमदानन्दतीर्थभगवत्पादाचार्य-विरचितं भाष्यं समुचितश्रुतिस्मृत्युदाहरणेन पुष्टं गभीरया शैल्या परमत-विमर्शनसत्सिद्धान्तस्थापनदक्षं च विराजते । अस्य च श्रीमज्जयतीर्थ-पूज्यचरणप्रणीता स्वाचार्याशयव्याख्या विभवप्रदर्शनपरा व्याख्या तत्त्वप्रकाशिकानाम्नी समुल्लसति । अस्याः गाम्भीर्यं श्रीमद्व्यासतीर्थ-श्रीमच्चरणप्रभृतिभिः षड्दर्शनाचार्यैः सुष्ठूपवर्णितम् । अत्र भाष्योदाहृत-श्रुतिस्मृतीनां प्रतिपदार्थविवरणमपेक्ष्यते अद्यतनमन्दाधिकारिभिः श्रुत्यध्ययनव्याख्यानसम्प्रदायविकलैः । इयं च दीपिका भाष्योदाहृत-प्रमाणव्याख्यापरा प्राचीनव्याख्यानविमर्शनकुतूहला च श्रीजगन्नाथ-तीर्थप्रणीता विदुषां विद्यार्थिनां महते उपकाराय कल्पत इति पूर्णप्रज्ञ-संशोधनमन्दिरद्वारा मुद्रापिता । यद्यपीयं दीपिका प्रायश्चत्वारिंशद्वर्षेभ्यः पूर्वमेव श्रीमद्व्यासराजमठाधीशैः यशःशरीरैः श्रीविद्यापयोनिधितीर्थ-श्रीपादैः मुद्रापिताऽऽसीत् । परमिदानीं ग्रन्थानामनुपलम्भाद् विदुषां विद्यार्थिनां चाभ्यर्थनां पुरस्कृत्य अस्मदादेशेन संशोधनमन्दिरद्वारा यावच्छक्ति संशोध्य मुद्रापितः । गतवर्षे समन्वय-अविरोधाध्यायौ भाष्यदीपिकासमलङ्कृतौ मुद्रापितावास्ताम् । इदानीं तृतीय-तुरीयाध्यायावपि सिद्धाविति समेषां विदुषाम् अध्ययन-अध्यापने सूपकुर्वन्तीति विश्वसिमः ।

अस्मत्प्रियशिष्यं वेङ्कटरमणोपाध्यायं श्रद्धया संशोधनकर्मणि व्यापृतम् अस्मदाराध्यः श्रीकृष्णः आयुरारोग्यप्रदानेन समनुगृह्णात्वि-त्याशास्महे ।

**श्रीविश्वेशतीर्थश्रीपादाः**

श्रीपेजावरमठाधीशाः

उडुपि

## Director's Note

Bhashyadeepika of Sri Jagannatha Yati of Sri Vyasaraja Matha, spead new light on Brahmasutra-Bhashya. He has elloberately explained the references (Shruti and Smrti) quoted by Sri Madhwacharya which are not been explained in previous commentaries. Sri Swamiji quoted Tattvapradeepa views in almost every Adhikarana and examined the explanations given by early commentators. Some times he simply reject the views of few commentators and present his own and creative ideas views in Bhashya and Tattvaprakashika.

The source of inspiration behind this useful venture is our founder H.H. Sri Sri Vishveshatirtha Swamiji. To him we owe all we have and all we will have. How can we repay him for his support and encouragement except through our gratitude and Pranamas.

We gratefull to Prof. Radha Vallabh Tripathi Vice-chancellor, Rashtriya Sanskrit Samsthan (Deemed University), New Delhi, for his help and guidance at every step of our activities.

I will be failing in my duty, if I donot express my thanks to Sri C.S.Kaniyal Finance Officer of Rashtriya Sanskrit Samsthan, New Delhi for his anytime cooperation in all our venture.

I also thank Prof. D. Prahlada Char, Chairman, Poornaprajna Samshohana Mandiram Managing Committee, for his kind support in our academic activities.

I heartely congratulate the able editor for his valuable Vidwan P. Venkataramana Upadhyaya.

I thank M/s. Brindavan Printers who have printed neatly in a short span of time. I hope they extend the same co-operation in future also.

**Dr. A.V. Nagasampige**

Director.

# पीठिका

श्रीमद्व्यासराजविद्यासिंहासनाधीश्वराः पद-वाक्य-प्रमाणपारावार-पारीणाः श्रीमन्तः जगन्नाथयतयः (१७५५-१७७०) माध्ववाङ्मये अद्यापि स्वीयापूर्वप्रबन्धैः यशःकायेन जीवन्ति। तेषामियं भाष्यदीपिका चतुर्थाध्यायात्मिका इदानीं विदुषां करकमलयोः समर्प्यते। परविद्यांशब्द-मुख्यार्थानां ब्रह्मसूत्राणां वैशिष्ट्यमधिकृत्य विदुषां न किमपि वक्तव्यम् अस्ति। तदिदानीं माध्वभाष्यानुसारेण चतुर्थाध्यायसारः (फलस्वरूपं) सङ्ग्रहेण निरूप्यते।

## भाष्यदीपिकावैशिष्ट्यम् -

भाष्यदीपिकास्थाः द्वित्रा विषयाः निरूप्यन्ते। अस्य च वैशिष्ट्यमेवं सङ्ग्रहेण निरूप्यते-

१. भाष्यगतपाठभेदसूचनं तदर्थविवरणं च।

२. तत्त्वप्रकाशिकोक्तवाक्यार्थसंयोजनपुरस्सरं तत्त्वप्रदीपोक्त-वर्णकान्तरसङ्ग्रहणम्।

३. भाष्योदाहृतश्रुतिस्मृतीनां प्रतिपदार्थविवरणम्।

५. क्वचित् टिप्पण्यन्तराशयानुवदनम्। क्वचिच्चाभिप्रायभेदप्रकाशनम्।

६. सर्वमूलटीकाग्रन्थेषु आपाततः प्रतीयमानविरोधपरिहरणम्।

## चतुर्थाध्यायसारः

ब्रह्मसूत्रभाष्ये चतुर्थेऽध्याये फलं निरूप्यते। वैराग्य-भक्ति-उपासना-ज्ञानेन मुक्तिरूपं फलं साधकस्य भवति। तत्र मुक्तिर्नाम कीदृशीति श्रीमद्भागवते तत्स्वरूपं प्रतिपादितम् -

'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः'

(भाग. २.१०.६) इति।

सात्त्विको जीवः ज्ञानानन्दवीर्यादिगुणरूपः। यद्यपि संसारावस्थायां ज्ञानानन्दादयो जीवगुणा नानुभूयन्ते अनाद्यविद्यावृतत्वाद् अदृष्टाश्रुतवस्तुत्वाच्च। तदुक्तम्-

अतः परं यदव्यक्तमव्यूढगुणबृंहितम्।
अदृष्टाश्रुतवस्तुत्वात् स जीवो यः पुनर्भवः॥(भाग.१.३.७२)इति।

जीवस्वरूपावरणानि षडुक्तानि शास्त्रे। तानि च यथा-

**१. अविद्या-**

सत्त्वादिगुणात्मिका भावरूपाविद्या। 'बध्नन्ति नित्यदा मुक्तं मायिनं प्रकृतिं गुणाः' इति भागवतोक्तेः।

**२. कामः-**

'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय' इति गीतोक्तेः।

'तथा कामनिरुद्धोऽयम् उच्चावचतया भ्रमन्।' इति भागवतोक्तेश्च।

**३. प्रारब्धकर्म -**

'अनादिकर्मणा बद्धो जीवः संसारमण्डले।
वासुदेवेच्छया नित्यं भ्रमतीति हि तद्वचः॥'

**४. स्वगुणाच्छादिका -**

**५. परमाच्छादिका -**

'अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते ।
स्वगुणाच्छादिका त्वेका परमाच्छादिका परा ॥'

(भाग.ता. १०.९४.१५) इत्युक्तेः ।

**६. लिङ्गशरीरम्-**

एकं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तरम् ।
एष चेतनया युक्तो जीव इत्यभिधीयते ॥
अनेन पुरुषो देहान् उपादत्ते विमुञ्चति ॥

(४.२९.७६) इति भागवतोक्तेः ।

एकं लिङ्गशरीरं षोडशविस्तरम् । प्राणेन्द्रियान्तःकरणभेदेन त्रिवृत् । कथं पञ्चविधम् ? त्रिधा भिन्नया पञ्चविधया युतम् । पञ्चप्राणाः पञ्च-ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनसा सह षोडशविधम् ।

एवं, 'न ऋते त्वत्क्रियते' (ब्र.सू.अ.- पृ. २६१) इत्यनुव्याख्यान-व्याख्यावसरे 'परमेश्वरो अचिन्त्याद्भुतया स्वशक्त्या जीवस्वरूपचैतन्य-माच्छादयति' (न्या.सु.- पृ. २६६) इति सुधोक्तेः ईश्वरेच्छाऽपि सप्तमी प्रतिबन्धिकाऽऽवरणरूपा विद्यत इत्यवगन्तव्यम् ।

एवं चैताद‍ृशावरणैः बद्धो जीवः स्वीयमप्राकृतमानन्दं विद्यमानमपि अभुञ्जन् संसरति अनुभवति च दुःखम् । विद्यया चावरणानि हित्वा भगवत्प्रसादेन मुक्तिमाप्नुयात् ।

**अङ्गचतुष्टयुक्तो मोक्षः**

कर्मक्षयः, उत्क्रान्तिः, मार्गः, भोग इति चत्वारि मुक्तिसोपानानि । तदुक्तम्- 'कर्मक्षयः तथोत्क्रान्तिः मार्गो भोगचतुष्टयम् ।' (अनु. ४.१.१)

इति । अत्र प्रथमपादे प्रथमेऽधिकरणे सर्वदा श्रवणादेः कर्तव्यता समर्थ्यते । ब्रह्म गुणपूर्णमिति सर्वदा स्वामी इति च सर्वदोपास्यम् । भगवदङ्गोत्पन्नदेवैः तत्तदङ्गाश्रितत्वेनोपासना कार्या । ध्यानादिकं मनस एकाग्रतासाधके पवित्रे देशे आसीनेन कार्यमिति समर्थ्यते ।

**कर्मक्षयः-**

अपरोक्षज्ञानोत्तरं प्रथमतः कर्मक्षयो भवति । तदुक्तम्-

'तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्'

(ब्र.सू. ४.१.१३) इति ।

अयमाशयः- मोक्षयोग्यैः क्रियमाणं कर्म द्विविधम् । पुण्यं पापं चेति । पुण्यमपि प्रवृत्तनिवृत्तभेदेन द्विविधम् । प्रवृत्तं स्वर्गादिफलकम् । ज्ञानात्पूर्वभावि निवृत्तं कर्म अपरोक्षज्ञाननिदानम् । तदुत्तरं तु मुक्तावानन्दातिशयकारणम् । अपरोक्षज्ञाने जाते सञ्चितपापस्य नाशो भवति । तदुक्तम्-

'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' (भ.गी.) इति ।

अत्र पापनाशो नाम द्विषतां प्रदानमेव । केषाञ्चित्स्वरूपतोऽपि नाशः विद्यते । एवमनिष्टपुण्यस्य कूपतटागादिनिर्माणजस्य सुहृद्भ्यः प्रदानम् । तदुक्तम्-

'अतोऽन्यदपीत्यकेषामुभयोः'(ब्र.सू. ४.१.१७) ।

प्रारब्धकर्मणस्तु भोगेनैव क्षयः । तदुक्तम्- 'प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः' (स.शा.सं.) इति । प्रारब्धस्यापि संविदा उपमर्दो भवति । तदुक्तं भागवते- 'न वै जनो जातु कथञ्चनाव्रजेत् मुकुन्दसेवी अन्यवदङ्ग संसृतिम्' (भाग. १.५.१९) इति ।

**उत्क्रान्तिः-**

उत्क्रान्तिमार्गौ प्रायेण देवकक्ष्याबहिर्भूतानामेव । तदुक्तम्- 'उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः ।' (ब्र.सू.अनु.) इति । देवेतराणां ब्रह्मनाड्या चरमशरीरादुत्क्रान्तिः । देवानां तु स्वोत्तमेषु प्रविश्य देहत्यागेन चतुर्मुखद्वारा परमात्मनि प्रवेशः ।

प्रारब्धानुभवानन्तरं हृदिस्थहरेः तेजसा हृदयाग्रे प्रकाशो जायते । प्राणाद्यशेषपरिवारविशिष्टः हृदयस्थो भगवान् तदा जीवमादाय प्रकाशद्वारेण ब्रह्मनाडीं प्रविशति । मूलाधारं समारभ्यामूर्धानमृजुस्थिता सुषुम्नानाड्येव पञ्चप्रभेदिनी ब्रह्मनाडीत्युच्यते । तत्राप्रतीकालम्बनानां देवादिव्यतिरिक्तानां सुषुम्नानाडीमध्यादुत्क्रमणम् । तदा हृदयाग्रं प्रद्योतते । तत्र वायुः पुरतो गच्छति । तमनु जीवमादाय परमात्मा । तदुक्तम्-

'तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ।' (ब्र.सू. ४.२.१७) इति ।

देवानां स्वोत्तमेषु लय इत्युक्तम् । तत्र द्वौ मार्गौ गरुडमार्ग-शेषमार्गभेदेन । तत्रत्यः क्रमः-

| | |
|---|---|
| मनुष्योत्तमानां निर्ऋतेश्च **यमे** | गन्धर्वाणां **कुबेरे** |
| यमस्य पितृवैवस्वतादीनां **स्वायम्भुवमनौ** | शतस्थानामश्विनोश्च **वरुणे** |
| अग्नेः **सूर्ये** | कुबेर-वरुणयोः **सोमे** |
| सूर्याकाशपृथिवीनां **गुरौ** | सोमस्य विष्वक्सेनादीनां च **अनिरुद्धे** |
| मनु-गुरु-दक्ष-शचीनाम् **इन्द्रे** | रत्यनिरुद्धसनकादीनां **कामदेवे** |
| इन्द्रस्य **सौपर्ण्याम्** | कामदेवस्य **वारुण्याम्** |
| सौपर्ण्यर्याः **गरुडे** | वारुण्याः **शेषे** |
| **गरुडमार्गः** | **शेषमार्गः** |

गरुडस्य सरस्वत्याम् शेषस्य सरस्वत्याम्

सरस्वत्याः विरिञ्चे

विरिञ्चस्य लक्ष्मीद्वारा नारायणे लयः

तदेतत्सर्वमुक्तम्- 'वाङ्मनसि दर्शनात् शब्दाच्च' (ब्र.सू. ४.२.१) अत एव च सर्वाण्यनु. (४.२.३) सोऽध्यक्षे तदुपगमादिभ्यः (४.२.४) 'भूतेषु तच्छ्रुतेः' (४.२.५) इत्यादिसूत्रेषु ।

**मार्गः**

आदौ शरीरादुत्क्रान्तोऽर्चिर्लोकं गच्छति। अर्चिर्लोके चार्चिर्नामाग्नि-सुतोऽग्निर्ज्योतिरिति रूपद्वयेन तिष्ठति। तत्रादावग्निनामकं द्वितीयं रूप-मेति। प्रत्युद्गमादिभिर्भगवत्पूजा च पूर्ववदेव सर्वलोकेषु भवति। एवमर्चिर्लोके द्विरूपेण संस्थितमग्नेः सुतमर्चिर्नामानं देवं प्राप्य तत आतिवाहिकलोकं गच्छति। तत्रातिवाहिकलोकनामानं वायुपुत्रं ततोऽहरभिमानिलोकं ततः शुक्लपक्षाभिमानिलोकं तत उत्तरायणाभिमानिलोकं ततः संवत्सराभिमानि-लोकं ततो विद्युदभिमानिलोकं ततो वरुणलोकं ततः प्रजापतिलोकं ततः सूर्यलोकं ततः सोमलोकं ततो वैश्वानरलोकं तत इन्द्रलोकं ततो ध्रुवलोकं ततो भारतीलोकं ततो वायुलोकं गच्छति। तत्र च वायुदेवप्रसादेन भगवद्ध्यानादिसुखसम्भृतमनाः जीवः बहुकालं तिष्ठति।

तदुक्तम्-

उत्क्रान्तस्तु शरीरात् स्वात् गच्छत्यर्चिषमेव तु।
ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽतिवाहिकः॥
ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा।
तटितं वरुणं चैव प्रजापं सूर्यमेव च॥

सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥
(ब्र.सू.भा. ४.३.५) इति ।

एवं जीवः चतुर्मुखब्रह्मणा सह विरजायां कृतस्नानः त्यक्तलिङ्गशरीरश्च स्वरूपशरीरेण भगवदुदरे ध्यानङ्गतः तिष्ठति । सृष्टिकाले भगवदुदरस्थित-लक्ष्म्यात्मकश्वेतद्वीपानन्तासनवैकुण्ठलोकानां भगवदुदरात् पुनः ब्रह्माण्डे स्थापिते तत्र श्वेतद्वीपपतिं परवासुदेवं दृष्ट्वा अपसृतभगवदिच्छारूप-सप्तमावरणः स्वरूपशरीरेण अमन्दमानन्दमनुभवन् यथायोग्यं भूमौ अन्तरिक्षे स्वर्गे श्वेतद्वीपादौ तिष्ठति ।

**भोगः -**

मुक्तिरियं सालोक्य-सामीप्य-सारूप्य-सायुज्यभेदेन चतुर्विधा ।

**१. सालोक्यम्-**

भगवल्लोकावस्थानं विना भूम्यादिषु स्थित्वा परमात्मसन्निधाननिमित्तेन (दर्शनेन वा) भोगः सालोक्यमुच्यते । अत्र मनुष्योत्तमा अधिकारिणः । तदुक्तम्- 'केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन' इति ।

**२. सामीप्यम् -**

भगवत्सामीप्यविशेषाद् भोगविशेषवन्तः ऋष्यादयः सामीप्यभाजः । तदुक्तं भाष्ये- 'तत्रापि क्रमयोगेन ज्ञानाधिक्यात् समीपगाः' इति ।

बृहद्भाष्ये च-

'उपासनाबलान्मुक्तो भोगान् कर्मफलान् सदा ।
भुङ्क्ते विष्णोः समीपस्थो सर्वदोषविवर्जितः ॥' इति ।

३. सारूप्यम् -

'सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेशनिष्काभरणाः सुपेशसः ।' (भाग. २.९.११) इति द्वितीयभागवतोक्तदिशा विष्णोरिव चतुर्बाहवः शङ्ख-चक्रायुधसमलङ्कृताः शोभन्ते । सारूप्यपदयोग्याश्च जय-विजयादयो द्वारपालाः ।

४. सायुज्यम् -

स्वोत्पत्त्यङ्गेषु प्रविश्य तत्रैव स्थित्वा भगवच्छरीरे भोगानुभवः सायुज्यमुच्यते ।

'आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत् ॥'
(ब्र.सू.भा. ४.४.५) इति ।

अत्र देवानां स्वस्वोत्तमप्रवेशेन परमात्मशरीरेण च भोगः । चतुर्मुखस्य तु परमात्मशरीरप्रवेशेनैव भोगः । तदुक्तम् अणुभाष्ये-

'उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः ।
प्रविश्य भुञ्जते भोगान् तदन्तर्बहिरेव वा ॥
वायुर्विष्णुं प्रविश्यैव ॥' (स.शा.सं.) इति ।

एतत्तु प्रायिकम् । हरिशरीराद् बहिः भोगस्यापि प्रमितत्वात् । एवं माध्वभाष्यानुसारेण चतुर्थाध्यायसारः सङ्क्षेपेण निरूपितः ।

१. भाष्यदीपिकास्थाः केचन विषया अत्र स्थालीपुलाकन्यायेन निरूप्यन्ते ।

तत्रादौ सूत्रभाष्यटीकोक्तलयक्रमः भाष्यदीपिकायां सुष्ठु सङ्गृहीतः । तदीयवाक्यैरेव सः विषयः प्रस्तूयते ।

''**अत्रायं गुरुपादोक्तलयक्रमः**- मनुष्योत्तमानां निर्ऋतेश्च यमे लयः। यमस्य पितॄणां वैवस्वतादिमनूनां प्रियव्रतादिचक्रवर्तिनां च स्वायम्भुवे मनौ लयः। ऋभूणां पृथिव्यां लयः। साध्यानामाकाशे लयः। अग्निपुत्राणामग्नौ लयः। अग्नेः सूर्ये लयः। सूर्यस्याकाशस्य पृथिव्याश्च गुरौ लयः। भृग्वादीनां दक्षे लयः। मनुगुरुदक्षशचीनां मरुद्गणानां चेन्द्रे लयः। कुबेरस्य वरुणस्य च सोमे लयः। सोमस्य विष्वक्सेनादिपार्षदानां चानिरुद्धे लयः। अनिरुद्धस्य सनकादियतीनां रत्याश्च कामदेवे लयः। कामदेवस्य वारुण्याम्। वारुण्याः शेषे। शेषस्य सरस्वत्याम्। एवमिन्द्रस्य सौपर्ण्यां लयः। सौपर्ण्या गरुडे। गरुडस्य सरस्वत्याम्। एवं शेषगरुडमार्ग-भेदेन स्वोदरप्रविष्टाखिलप्रपञ्चायाः सरस्वत्याः विरिञ्चे लयः। विरिञ्चस्तु लक्ष्मीं प्रविश्य नारायणे लीनो भवतीति।''

२. अपरोक्षज्ञानानन्तरं सात्त्विकस्य जीवस्य कर्मक्षयोऽभिहितः। एवमेव हरिद्वेषिणि तमोयोग्येऽपि एष एव न्यायः वैपरीत्येन योजनीयः। सोऽयं विषयः भाष्यदीपिकागतवचनोद्धरणेनैव पूर्यते-

''इदं त्ववधेयम्- द्वेषिणः पूर्वपुण्यस्याप्रारब्धस्य विनाशः उत्तरस्याश्लेष इत्ययमर्थस्तावदितरस्येत्यनेनैवोक्तः। अग्निहोत्रादीत्यनेन ज्ञानिकृताकाम्य-पुण्यस्य पूर्वस्य ज्ञानार्थत्वमुत्तरस्य ज्ञानकार्यमोक्षातिशयार्थत्वमिति यो न्यायोऽभिहितः सोऽपि द्वेषिणि तद्वैपरीत्येनानुसर्तव्यः। द्वेषपरिपाक-प्राक्कालीनस्याप्रारब्धस्य पापस्य द्वेषाभिवृद्धिहेतुत्वमुत्तरस्य तु साक्षात्तमोऽ-नुप्रवेशः। एवमतोऽन्यदपीत्यनेन ज्ञानपूर्वकालीनकाम्यपुण्यस्याप्रारब्ध-स्यानिष्टस्य च नाशस्तदुत्तरकालीनस्य तादृशस्यासंश्लेष इति यो न्यायोऽ-भिहितः स द्वेषिण्यपि वैपरीत्येनानुसर्तव्यः। द्वेषपरिपाकात् पूर्वतनं काम्यमप्रारब्धं पुण्यमनिष्टं चेन्न नश्यति। यथा दुर्योधनादीनां राजत्वापादकं कुरुवंशादौ जननकारणं पुण्यम्। तस्य कृष्णभीमादिमहाद्रोहद्वारा

पूर्णतमोहेतुत्वात्। इष्टं चेन्नश्यति । द्वेषपूर्त्युत्तरकालीनं च काम्य-पुण्यमप्रारब्धमनिष्टं चेत् श्लिष्यते । इष्टं चेन्न श्लिष्यते । उत्तरस्याकाम्यस्य तु मनुष्याधमकृतस्य तमसि दुःखातिशयह्रासहेतुत्वं, कल्यादिकृतस्य तु तेषां दुःखस्य क्लृप्तत्वात् स्वयोग्याधिकपापविनाशहेतुत्वम् । एवं 'यदेव विद्यया' इत्यनेन ज्ञानिकृतोत्तरपुण्यस्य महानन्तफलत्वमिति यो न्यायोऽभिहितः सः द्वेषिपापेऽप्यनुसर्तव्यः । प्रमाणबलाद् द्वेषिपापस्यापि तमोऽनुप्रवेशोऽवश्यमङ्गीकार्य इति सूत्रत्रयन्यायो द्वेषिपुण्ये पापे चानुसर्तव्य इति ।''

## ३. अपूर्वप्रमेयाविष्करणम् -

'वैद्युतेनैव हि तच्छ्रुतेः' (ब्र.सू. ४.३.६) इति सूत्रव्याख्यानावसरे भाष्यकारैः वायुरेव परं ब्रह्म प्रापयति जीवस्येत्युक्तम् । अत्र बृहत्तन्त्रवचनमपि प्रमाणतयोदाहृतम् -

'विद्युत्पतिर्वायुरेव नयेद् ब्रह्म न चापरः ।
कुतोऽन्यस्य भवेच्छक्तिः तमृते प्राणनायकम् ।।' इति ।

अत्र विद्युत् भारती, तस्याः पतिः वायुः, ब्रह्म नयतीत्युक्तम् । अत्र अनुसन्धेयः सूक्ष्मविचारः भाष्यदीपिकायामुपवर्णितः -

अर्चिरादिमार्गे सुजीवः गच्छन् मार्गदेवम् इन्द्रमाप्नोति । ततः विश्व-तैजस-प्राज्ञान्, अनिरुद्ध-प्रद्युम्न-सङ्कर्षणांश्च प्राप्नोति । एते षट्सङ्ख्याकाः भारत्याः पुत्राः । नैतानि भगवद्रूपाणि । नामसाम्यमत्र भ्रामकम् । एते तु भारतीलोकस्य समीप एव वसन्ति । एतेषां मार्गदर्शनेन जीवः भारतीं ततः प्राणं च प्राप्नोति । ततः परमात्मानं ततः ब्रह्माण्डनवावरणान्यतीत्य विश्वादिभगवद्रूपाणि प्राप्नोति । ततोऽनिरुद्ध-प्रद्युम्न-सङ्कर्षण-वासुदेव-रूपाणि प्राप्नोति । ततः सर्वव्याप्तं सर्वावतारप्रादुर्भावबीजं नारायण-

माप्नोति । अत्रोत्तरोत्तरलोकाः विशिष्टसुखेताः । तत्र भगवतः नारायणस्य सन्निधाने जीवः सुखमनुभवतीति रहस्यम् । अपूर्वोऽयं विषयः सप्तमस्कन्ध-षोडशाध्यायव्याख्यानावसरे भगवत्पादैर्विशदीकृतः । स विषयः भाष्य-दीपिकायाम् एवं सङ्गृहीतः -

''अत्र विशेषः-

'विश्वाद्या अनिरुद्धाद्याः ते द्विधा सम्प्रकीर्तिताः ।
विष्णुरूपास्तदन्ये च तान् सर्वान् याति मोक्षगः ॥
तदन्ये च दिवस्पुत्राः सर्वे च द्युसमीपगाः ।
ते दिवं प्रापयन्त्येनं स वायुं स हरिं पृथक् ॥
विश्वादिरूपं तुर्यश्च वासुदेवश्च नापरः ।' (भा.ता. ७.१५.५२)

इति सप्तमस्कन्धतात्पर्योक्तोऽनुसन्धेयः । बृहत्तन्त्र इति । उक्तत्वादिति शेषः । अस्य नाशङ्कनीयमित्यनेनान्वयः ।'' इति ।

**विकारित्वेऽपि जीवोऽविनाशी**

अभावाधिकरणे (४.४.१०) जीवानां मुक्तौ जडदेहाभावेऽपि स्वरूपभूतशरीरस्य विद्यमानत्वेन भोगानुभव उपपन्न इत्युक्तम् ।

अपि च मुक्ताः शुद्धसत्त्वात्मकजडदेहमपि यदृच्छया स्वीकुर्वन्ति । तेन च भुञ्जते सकलान् भोगान् । यदृच्छया त्यजन्त्यपि । एवं च भोगानुभव-प्रतिबन्धकस्य कस्याप्यभावात् सर्वदा तेषां भोगानुभवोऽस्तीति प्रतिपादि-तम् । अत्र भाष्यदीपिकायां बृहदारण्यकभाष्यव्यासतीर्थीयटिप्पण्यनुरोधेन अपूर्वप्रमेयमाविष्कृतम्-

यद्यपि संसारावस्थायां जीवः अणुरेव । तथाऽपि मुक्तावीश्वरः तदीयं तेजः स्वरूपमपि सुमहत् करोति । तदुक्तम्-

'अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ ।
तदेव सुमहत्तेजः करोति भगवान् महत् ।
अतो नवतरं चैतत् ब्रह्मादीनां करोत्यजः ॥'(बृ.भा. ६.४.५) इति ।

अत्र स्वरूपशरीरस्य महत्त्वं च स्वस्वचरमशरीरसमत्वेन तूलपिण्डात् प्रचय एव क्रियत इति समाहितम् । न चात्र प्रचयाङ्गीकारे विकारित्वेन जीवस्यानित्यत्वप्रसक्तिः । 'ईश्वरशक्त्या तदुपपत्तेः' इति गीताभाष्य-प्रमेयदीपिकोक्तरीत्या सर्वं समञ्जसमित्युक्तम् ।

नैकस्मिन्नसम्भवात् (२.२.३३) इति सूत्रानुव्याख्यानसुधायामपि इयमाशङ्का समाहिता । यथा-

जीवस्वरूपे किञ्चिद्विकाराङ्गीकारेऽपि नानित्यत्वप्रसक्तिः। अनित्यत्वं हि तदैव भवति यदा जैवयावद्द्रव्यभाविधर्मेषु विकारोऽभ्युपेयते । न चैवं प्रकृते । तस्मात् स्वरूपदेहेन बाह्यशुद्धसत्त्वात्मकदेहेनापि मुक्तौ भोग-सम्भवात् सर्वं समञ्जसम् इति समाहितम् । एवमुत्तरप्रस्थानगता विषयाः यथासन्दर्भमत्र विदुषामुपाकाराय संयोजिताः ।

**अध्यायार्थसङ्ग्रहः**

चतुर्थाध्यायसारः मुख्यविषयोपबृंहितः सम्यक् सङ्गृहीतः भाष्यदीपिका-कारैः । तदीयवाक्यैरेव स विषयः प्रस्तूयते-

''अत्रायमाचार्योक्तोऽध्यायार्थसङ्ग्रहः- येऽप्रतीकालम्बनाः देवाः भगवज्ज्ञानभोगाभ्यां निवृत्तसमस्तानिष्टकर्माणः चेतनोत्क्रमणात् प्रागेव देहनाशादर्चिरादिलोकानां च नष्टत्वादुत्क्रमणेनार्चिरादिमार्गेण च रहिताः तत्वेतरदेवाः अण्डलयकाले तत्वदेवाः अण्डलयानन्तरं यथायोग्यं स्व-स्वोत्तमप्रवेशेन परित्यक्तदेहाः स्वोचितेन पथा गरुडमार्गेण शेषमार्गेण च

पुन्नामकहिरण्यगर्भेण सह वैकुण्ठवासिनं भगवन्तं प्राप्तास्तेन सह विरजास्नानेन भिन्नलिङ्गशरीराः विध्वस्तप्रकृतयः अत्यन्तनिवृत्तानिष्टा भवन्ति । ये तु ऋषयः देवानुगाः पितरः प्रतीकालम्बनाः भगवदपरोक्षानन्तरं भगवज्ज्ञान-भोगाभ्यां निवृत्तसमस्तानिष्टकर्माणः उत्क्रमणेन त्यक्तदेहाः अर्चिरादिपथा यथायोग्यस्थाने स्थिताः अण्डलयकाले स्वोत्तमान् प्रविष्टाः वैकुण्ठवासिनं हरिं प्राप्ताः हिरण्यगर्भेण सह विरजास्नानेन भिन्नलिङ्गशरीराः विध्वस्तप्रकृतयः अत्यन्तनिवृत्तानिष्टा भवन्ति । ये तु मनुष्योत्तमाः निष्कामुकभगवदर्थ-श्रुत्यादिविहितकार्यानुष्ठानेन शुद्धान्तःकरणाः प्रक्षीणरागादिदोषाः सञ्जात-भगवद्भक्तिमन्तः श्रवणमनननिदिध्यासनाभ्यासवन्तः परमभागवताः स्व-योग्यभगवदपरोक्षानन्तरमत्यन्तनिवृत्तानिष्टसञ्चितकर्माणः आगामि-दुष्कर्मलेपविधुराः यावत्प्रारब्धं भागवतधर्मनिष्ठाः उत्तरायणमार्गेण त्यक्तदेहाः भगवल्लोकगमनार्थमर्चिरादिपथा महरादिलोके समासीनाः लयकाले स्वोत्तमप्रवेशेनोर्ध्वं गताः ब्रह्माण्डलयानन्तरं लिङ्गशरीरभङ्गकाले उपस्थिते सुषुम्नामार्गेण त्यक्तान्यदेहाः हिरण्यगर्भेण सह विरजास्नानेन भिन्नलिङ्ग-शरीराः प्रध्वस्तस्वगुणाच्छादिकाः विध्वस्तप्रकृतयः अत्यन्तनिवृत्तानिष्टा भवन्ति । ये त्वत्यल्पाः मानुषाः स्थावरादयश्च एकगुणोपासकाः कार्य-ब्रह्मकालान्त्यभागे स्वस्वयोग्यावतारापरोक्षिणः उत्क्रमणार्चिरादिमार्ग-रहिताः प्रभुक्तात्यल्पप्रारब्धकर्माणः अण्डलयकाले स्वोत्तमप्रवेशेनोर्ध्वं गताः ब्रह्मणा सह त्यक्तलिङ्गशरीराः विध्वस्तप्रकृतयोऽत्यन्तनिवृत्तानिष्टाः भवन्ति । ते सर्वेऽपि महाप्रळये भगवदुदरे स्थित्वा पुनस्सृष्टौ भगवल्लोका-विर्भावे श्वेतद्वीपगतभगवद्दर्शनेनापगतभगवदिच्छावरकाः सम्यगाविर्भूत-ज्ञानानन्दादिगुणाः वासुदेव-परिक्लृप्तस्वस्वयोग्यस्थानेषु स्थिताः भगवन्त-मुपासीनाः सयुजः भगवद्देहे वहिश्च अन्ये बहिरेव स्वरूपदेहेन लीला-

गृहीतविग्रहैर्वा सङ्कल्पमात्रसाध्यान् दिव्यान् भोगान् तारतम्येन भुञ्जानाः न कदाचित् पुनरावर्तन्त इति।''

एवमनेकेऽपूर्वाः विषया अस्मिन् व्याख्याने लभन्त इत्यर्थवानयं मुद्रणप्रयासः। अस्याध्ययनं विद्यार्थिनां विदुषां च महते उपकाराय कल्पत इति विश्वसिमः।

ग्रन्थस्यास्य संशोधने ब्रह्मविद्याप्रदानेन समनुग्राहकेभ्यः पदवाक्यप्रमाण-पारावारपारीणेभ्यः पेजावरमठाधिपेभ्यः श्रीमद्भ्यः श्रीविश्वेशतीर्थ-श्रीमच्चरणेभ्यः सभक्तिश्रद्धं प्रणतिततीः समर्पये।

ग्रन्थस्यास्य प्रकाशनार्थं समुचितवित्तदानादिना प्रोत्साहकेभ्यः नव-देहलीस्थराष्ट्रियसंस्कृतसंस्थानकुलपतिपदमलङ्कुर्वाणेभ्यः विद्वत्प्रवरेभ्यः राधावल्लभत्रिपाठीमहाभागेभ्यः सादरं प्रणामाः समर्प्यन्ते।

सर्वदाऽपि संशोधनमन्दिरकार्येषु स्वीयाभिमानं प्रकाश्य मार्गदर्शनेन प्रोत्साहकेभ्यः सि.एस्. कनियाल्महाभागेभ्यः वन्दनानि समर्पये।

पूर्णप्रज्ञसंशोधनमन्दिरस्याध्यक्षपदमलङ्कुर्वाणेभ्यः अस्मद्गुरुवर्येभ्यः डि. प्रह्लादाचार्येभ्यः तदीयं मार्गदर्शनम् अनुग्रहं च परमादरेण संस्मरामि।

ग्रन्थस्यास्य शोधकर्मणि अपूर्वं साह्यमाचरितवद्भ्यः डा. ए.वि. नागसम्पिगेमहाभागेभ्यः सादरं वन्दनानि समर्पये।

ग्रन्थस्यास्य संशोधने मातृकाप्रदानेन शोधनकर्मणि उपकारं विहित-वद्भ्यः धारवाडग्रामस्थगोविन्दराव् नवलगुन्दमहाभागेभ्यः वन्दनानि।

**पि.वि. उपाध्यायः**

# ಮುನ್ನುಡಿ

ಶ್ರೀವ್ಯಾಸರಾಜಮಠದ ವಿದ್ಯಾಸಿಂಹಾಸನವನ್ನು ಕ್ರಿ.ಶ. 1755- 1770 ಅಲಂಕರಿಸಿ ತತ್ತ್ವವಾದದ ಪರಂಪರೆಗೆ ಅದ್ವಿತೀಯಸೇವೆಸಲ್ಲಿಸಿದವರು ಶ್ರೀಜಗನ್ನಾಥಯತಿಗಳು. ಶ್ರೀಮದಾಚಾರ್ಯರ ಬ್ರಹ್ಮಸೂತ್ರಭಾಷ್ಯಕ್ಕೆ ಅವರು ರಚಿಸಿದ ವ್ಯಾಖ್ಯೆ 'ಭಾಷ್ಯದೀಪಿಕೆ'. ಭಾಷ್ಯಕಾರರ ಆಶಯವನ್ನು ಪ್ರಾಚೀನ ಟೀಕೆಗಳ ಬೆಳಕಿನಲ್ಲಿ ವಿವರಿಸುವ ಈ ಕೃತಿಗೆ ಭಾಷ್ಯದೀಪಿಕೆಯೆಂಬ ಹೆಸರು ಅನ್ವರ್ಥವೆನಿಸುವುದು. ಭಾಷ್ಯದೀಪಿಕೆಯ ವೈಶಿಷ್ಟ್ಯವನ್ನು ಹೀಗೆ ಸಂಕ್ಷೇಪವಾಗಿ ಸೆರೆಹಿಡಿಯಬಹುದಾಗಿದೆ-

1. ಭಾಷ್ಯಪಾಠ ಭೇದಗಳ ಸೂಚನೆ ಮತ್ತು ಅರ್ಥವಿವರಣೆ.
2. ಟೀಕೆಯಲ್ಲಿ (ತತ್ತ್ವಪ್ರಕಾಶಿಕೆ) ನಿರೂಪಿಸಿದ ವಿಷಯಗಳ ಜೊತೆಗೆ ಪ್ರಾಚೀನ ಟೀಕೆಯಾದ ತತ್ತ್ವಪ್ರದೀಪದ ವಿಷಯಗಳ ಮಂಡನೆ.
3. ಬ್ರಹ್ಮಸೂತ್ರಭಾಷ್ಯ ಟೀಕೆಯ ವಿವರಣೆಯ ಜೊತೆಗೆ, ಅನುವ್ಯಾಖ್ಯಾನ ಸುಧಾ-ಸರ್ವಮೂಲ ಗ್ರಂಥಗಳಲ್ಲಿ ಬರುವ ಸಂದರ್ಭೋಚಿತ ವಿಷಯ ಗಳ ಉಪಪಾದನೆ.
4. ಭಾಷ್ಯದಲ್ಲಿ ಉದಾಹರಿಸಿದ ಶ್ರುತಿಸ್ಮೃತಿಗಳ ಪ್ರಾಯಃ ಪ್ರತಿಪದಾರ್ಥ ವಿವರಣೆ.
5. ಕೆಲವು ಟಿಪ್ಪಣಿಯ ವಿಷಯಗಳ ಅನುವಾದದ ಜೊತೆಗೆ ಕೆಲವಡೆ ಅಭಿಪ್ರಾಯಭೇದ ತಳೆಯುವುದು ಅಥವಾ ಇನ್ನೊಂದು ವ್ಯಾಖ್ಯಾನದ ಆಶಯ ನಿರಾಕರಣೆ.
6. ಟೀಕಾಗ್ರಂಥಗಳಲ್ಲಿ ಮತ್ತು ಸರ್ವಮೂಲಗ್ರಂಥಗಳಲ್ಲಿ ಆಪಾತತಃ ತೋರುವ ವಿರೋಧ ಪರಿಹಾರ.

## ವ್ಯಾಖ್ಯಾನಗಳ ವಿಮರ್ಶೆ

ನ ಪ್ರತೀಕಾಧಿಕರಣದಲ್ಲಿ (4. 1. 3) ಶ್ರೀಜಗನ್ನಾಥಯತಿಗಳು ಮಾಡಿರುವ ವಿಮರ್ಶೆ- ಸೂಕ್ಷ್ಮಚಿಂತನೆಗಳನ್ನು ಒಳಗೊಂಡಿದ್ದು. ಇಲ್ಲಿ ಸಂಗ್ರಹವಾಗಿ ನಿರೂಪಿಸಲಾಗಿದೆ-

ಛಾಂದೋಗ್ಯೋಪನಿಷತ್ತಿನಲ್ಲಿ ನಾಮ-ವಾಕ್-ಮನಸ್ಸು-ಸಂಕಲ್ಪ-

ಚಿತ್ತ-ಧ್ಯಾನ-ವಿಜ್ಞಾನ-ಬಲ-ಅನ್ನ-ನೀರು-ತೇಜಸ್-ಆಕಾಶ-ಸ್ಮರ-ಆಶಾ-ಪ್ರಾಣ ಗಳನ್ನು ಬ್ರಹ್ಮನೆಂದು ಉಪಾಸನೆ ಮಾಡಬೇಕು. (ಛಾಂ.7.1.5) ಎಂಬ ನಿರೂಪಣೆ ಇದೆ. ಜಡವಾದ ನಾಮ-ಮನಸ್ಸು-ಜಲ-ಆಕಾಶ ಮೊದಲಾದವು ಗಳು ಬ್ರಹ್ಮನಾಗಲು ಸಾಧ್ಯವಿಲ್ಲ. ಆದ್ದರಿಂದ ಸೂತ್ರಕಾರರು ಶ್ರುತಿಯ ಆಂತರ್ಯವನ್ನು ವಿವರಿಸಿದರು- 'ನ ಪ್ರತೀಕೇ ನ ಹಿ ಸಃ (4.1.3)

ಇಲ್ಲಿ 'ನಾಮ' ಮೊದಲಾದ ಶಬ್ದಗಳಿಂದ ಪ್ರತಿಪಾದ್ಯವಾದ ವಸ್ತು ಹಾಗೂ ಆದರ ಅಭಿಮಾನಿದೇವತೆಯಲ್ಲಿ ಬ್ರಹ್ಮನನ್ನು ಉಪಾಸನೆ ಮಾಡಬೇಕು. ಜಡವಸ್ತು ಹಾಗೂ ಚೇತನವಸ್ತುಗಳು ಪರಬ್ರಹ್ಮನ ಅಧಿಷ್ಠಾನವಾಗಿದ್ದು 'ಪ್ರತಿಮೆ'ಎನಿಸಿವೆ. ಜಡ-ಚೇತನಗಳು ಎಂದೂ ಬ್ರಹ್ಮವಾಗುವುದಿಲ್ಲ. ನಾಮ-ವಾಕ್ ಮೊದಲಾದ ಈ ಪ್ರಕರಣದಲ್ಲಿ ಬರುವ ಶಬ್ದಗಳಿಂದ, ಉಷಾ-ಸ್ವಾಹಾ-ಪರ್ಜನ್ಯ-ಮಿತ್ರ-ಅಗ್ನಿ-ವರುಣ-ಚಂದ್ರ-ಪ್ರಾಣ-ಪ್ರವಹ-ಅನಿರುದ್ಧ-ಇಂದ್ರ-ಉಮಾ-ರುದ್ರ-ಭಾರತೀ-ಪ್ರಾಣ ಎಂಬ ಅಭಿಮಾನಿದೇವತೆಗಳನ್ನು ತೆಗೆದುಕೊಳ್ಳಬೇಕು.

ಈ ಚೇತನರಲ್ಲಿ ಭಗವಂತನ ಉಪಾಸನೆ ನಡೆಸಬೇಕೆಂಬುದು ಸೂತ್ರಕಾರರ ಹೃದಯ.

'ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸೀತ' ಎಂಬ ಶ್ರುತಿವಚನವನ್ನು ಗಮನಿಸಿದಾಗ 'ಸಾಮಾನಾಧಿಕರಣ್ಯವ್ಯಪದೇಶ' (ಸಮಾನವಿಭಕ್ತಿಯುಳ್ಳ ವಿಶೇಷ್ಯ-ವಿಶೇಷಣಗಳನ್ನು / ಧರ್ಮ-ಧರ್ಮಿಗಳನ್ನು ತಿಳಿಸುವ ಎರಡು ಪದಗಳನ್ನು ಒಳಗೊಂಡ ಪ್ರಯೋಗ. ಉದಾ- 'ಸುಂದರೋ ರಾಮಃ' (ಸೌಂದರ್ಯ-ವದಭಿನ್ನೋ ರಾಮಃ) ಇದೆ. ಇದರಿಂದ ಮೇಲ್ನೋಟಕ್ಕೆ ನಾಮ-ಬ್ರಹ್ಮಗಳಿಗೆ ಅಭೇದವನ್ನು ಹೇಳಿದಂತೆ ಕಾಣುವುದು. ಆದ್ದರಿಂದ ಆಚಾರ್ಯರು ಬ್ರಹ್ಮತರ್ಕದ ವಚನವನ್ನು ಉದಾಹರಿಸಿ ಆದರ ಆಂತರ್ಯವನ್ನು ವಿವರಿಸಿದ್ದಾರೆ-

ನಾಮಾದಿ ಪ್ರಾಣಪರ್ಯಂತಮುಭಯೋಃ ಪ್ರಥಮಾತ್ವತಃ ।
ಐಕ್ಯದೃಷ್ಟಿರಿತಿ ಭ್ರಾಂತಿರಬುಧಾನಾಂ ಭವಿಷ್ಯತಿ ।
ನಾಮಾದಿಸ್ಥಿತಿರೇವಾತ್ರ ಬ್ರಹ್ಮಣೋ ಹಿ ವಿಧೀಯತೇ ॥
ಸರ್ವಾರ್ಥಾ ಪ್ರಥಮಾ ಯಸ್ಮಾತ್ ಸಪ್ತಮ್ಯರ್ಥಾ ತತೋ ಮತಾ ॥

ಈ ಪ್ರಮಾಣವಚನದ ಅಭಿಪ್ರಾಯ ಹೀಗಿದೆ-

ಛಾಂದೋಗ್ಯದಲ್ಲಿ ಬರುವ ನಾಮದಿಂದ ಆರಂಭಿಸಿ ಪ್ರಾಣನವರೆಗೆ ಉಲ್ಲಿಖಿತವ್ಯಕ್ತಿಗಳನ್ನು ತಿಳಿಸುವ 'ನಾಮ' ಮೊದಲಾದ ಪದಗಳು ಮತ್ತು ಬ್ರಹ್ಮಪದವೂ ಪ್ರಥಮಾವಿಭಕ್ತಿಯನ್ನು ಹೊಂದಿರುವ ಕಾರಣ, ಅವುಗಳಲ್ಲಿ ಅಭೇದವಿದೆಯೆಂಬ ಭ್ರಾಂತಿ ಉಂಟಾಗುತ್ತದೆ. ಆದರೆ ಇಲ್ಲಿ 'ನಾಮ' ಮೊದಲಾದ ಪದಗಳಿಂದ ವಾಚ್ಯನಾದ ದೇವತೆಯಲ್ಲಿ ಪರಬ್ರಹ್ಮನ ಉಪಾಸನೆಯನ್ನು ಇಲ್ಲಿ ವಿಧಿಸಲಾಗಿದೆ.

'ನಾಮ' 'ವಾಕ್' ಎಂಬ ಪ್ರಥಮಾವಿಭಕ್ತಿಯನ್ನು ಹೊಂದಿದ ಪದಗಳಿಗೆ ಎಲ್ಲ ವಿಭಕ್ತಿಗಳ ಅರ್ಥವನ್ನು ಹೇಳಬಹುದಾದ ಕಾರಣ ಸಪ್ತಮೀವಿಭಕ್ತಿಯ ಅರ್ಥವನ್ನು ಪ್ರಕೃತ ತೆಗೆದುಕೊಳ್ಳಬಹುದಾಗಿದೆ. 'ನಾಮ ಬ್ರಹ್ಮವೆಂದು ಉಪಾಸನೆಮಾಡಿ' (ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸೀತ) ಎಂಬ ವಾಕ್ಯಕ್ಕೆ ನಾಮದಲ್ಲಿ ನಾಮಾಭಿಮಾನಿದೇವತೆಯಾದ ಉಷಾದೇವಿಯಲ್ಲಿ ಪರಮಾತ್ಮನನ್ನು ಉಪಾಸನೆ ಮಾಡಿ ಎಂದು ಅರ್ಥವಾಗಿದೆ.

ಇಲ್ಲಿ ಭಾಷ್ಯದೀಪಿಕಾರರು ಕೆಲವು ವ್ಯಾಖ್ಯಾನಕಾರರ ಅಭಿಪ್ರಾಯವನ್ನು ಉಲ್ಲೇಖಿಸಿದ್ದಾರೆ-

'ಛಾಂದೋಗ್ಯೋಪನಿಷತ್ತಿನಲ್ಲಿ 'ನಾಮೋಪಾಸ್ವ' (7.1.4) 'ವಾಚಮುಪಾಸ್ವ' (7.2.1) ಎಂಬುದಾಗಿ ನಾಮ ಮೊದಲಾದವನ್ನು ಬ್ರಹ್ಮನೆಂದು ಉಪಾಸನೆ ಮಾಡಿರೆಂದು ವಿಧಿಸುವ ವಾಕ್ಯಗಳು ಕಾಣುತ್ತವೆ. ' ಸ ಯೋ ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸ್ತೇ ಯಾವನ್ನಾಮ್ನೋಗತಂ ತತ್ರಾಸ್ಯ ಕಾಮಚಾರೋ ಭವತಿ (ಛಾಂ.7.1.5) 'ವಾಚಂ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸ್ತೇ ಯಾವದ್ವಾಚೋಗತಂ ತತ್ರಾಸ್ಯ' (ಛಾಂ.7.2.2) ಇತ್ಯಾದಿಯಾಗಿ ಉಪಾಸನೆಯ ಫಲವನ್ನು ತಿಳಿಸುವ ವಾಕ್ಯಗಳಿದ್ದಾವೆ. ಛಾಂದೋಗ್ಯದಲ್ಲಿ ಬರುವ ವಿಧಿ ಮತ್ತು ಫಲಗಳನ್ನು ನಿರೂಪಿಸುವ ಪ್ರಕರಣದಲ್ಲಿರುವ 'ನಾಮ' 'ವಾಕ್' ಮೊದಲಾದ ಪದಗಳು ದ್ವಿತೀಯಾವಿಭಕ್ತ್ಯಂತವಾಗಿದ್ದಾವೆ, ಪ್ರಥಮಾವಿಭಕ್ತ್ಯಂತವಲ್ಲ. ಆದ್ದರಿಂದ 'ಉಭಯೋಃ ಪ್ರಥಮಾತ್ವತಃ ಎಂಬ ಪ್ರಮಾಣವಚನದ ಪ್ರಕೃತೋಲ್ಲೇಖ ಹೇಗೆ ಸಂಗತ? ಈ ಪ್ರಮಾಣವಚನವು ಪ್ರಥಮಾವಿಭಕ್ತ್ಯಂತವಾದ ಪದಗಳಲ್ಲಿ ಐಕ್ಯಭಾವನೆಯ ಸಂಭವನೀಯತೆಯನ್ನು ಪ್ರತಿಪಾದಿಸುತ್ತಿದೆಯಲ್ಲವೆ?

ಇದರ ಪರಿಹಾರವನ್ನು ಹೀಗೆ ತಿಳಿಯಬೇಕು-

ಆಚಾರ್ಯರು 'ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸೀತ' ಎಂಬುದಾಗಿ ಭಾಷ್ಯದಲ್ಲಿ ಉದಾಹರಿಸಿದ ಪ್ರಮಾಣವಚನವು, ಶಾಖಾಂತರದಲ್ಲಿರುವುದೇ ಆಗಿದೆ. ಛಾಂದೋಗ್ಯದಲ್ಲಿ 'ನಾಮಬ್ರಹ್ಮ-ವಾಕ್‌ಬ್ರಹ್ಮ ಇತ್ಯಾದಿಸ್ಥಳಗಳಲ್ಲಿ ದ್ವಿತೀಯಾವಿಭಕ್ತಿಯೇ ಇದೆ 'ಪ್ರಥಮಾತ್ವತಃ' ಎಂಬ ಬ್ರಹ್ಮತರ್ಕ ವಚನವು ಪ್ರಥಮಾವಿಭಕ್ತ್ಯಂತ ಪದಗಳಂತೆಯೇ ದ್ವಿತೀಯಾವಿಭಕ್ತಿ ಇರುವಾಗಲೂ ಅಭೇದವು ಪ್ರತೀತವಾಗುತ್ತದೆ ಎಂಬ ಆಶಯ ಹೊಂದಿದೆ. 'ದೇವದತ್ತನನ್ನು ಜಾಣನೆಂದು ತಿಳಿ' (ದೇವದತ್ತಂ ಬುದ್ಧಿಮಂತಂ ವಿದ್ಧಿ) 'ಸಿಂಹವೆಂದು ತಿಳಿ' (ಸಿಂಹಂ ವಿದ್ಧಿ) ಇತ್ಯಾದಿ ಉದಾಹರಣೆಗಳನ್ನು ಪರಿಶೀಲಿಸಿದಾಗ ಇಲ್ಲಿ ಎರಡರಲ್ಲಿ ಅಭೇದವು ಗೋಚರವಾಗುತ್ತದೆ.

ಈ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ತತ್ತ್ವಪ್ರದೀಪದಲ್ಲಿ - 'ಪ್ರಥಮಾತ್ತ್ವತಃ' ಎಂಬ ಪದವು ಪ್ರಥಮಾವಿಭಕ್ತಿಗೆ ಸಮೀಪದಲ್ಲಿರುವ ದ್ವಿತೀಯಾವಿಭಕ್ತ್ಯಂತ ಪದವನ್ನು ಉಪಲಕ್ಷಣಯಾ (ಅಜಹಲ್ಲಕ್ಷಣಯಾ) ಬೋಧಿಸುತ್ತದೆ. ಆದ್ದರಿಂದ 'ಪ್ರಥಮಾತ್ವತಃ' ಎಂಬ ಪದಕ್ಕೆ ದ್ವಿತೀಯಾವಿಭಕ್ತ್ಯಂತವಾದ ಪದಗಳೆರಡು ಇರುವಾಗಲೂ ಅಭೇದಬೋಧಕ್ಕೆ ಯಾವ ಬಾಧಕವಿಲ್ಲ. ಈ 'ನ ಪ್ರತೀಕಾಧಿಕರಣ'ದಲ್ಲಿ ಉಲ್ಲೇಖಿಸಿದ 'ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸೀತ' ಎಂಬ ವಚನವು ಛಾಂದೋಗ್ಯ ವಚನವಾಗಿರದೇ ಶಾಖಾಂತರದಲ್ಲಿರುವ ವಚನವೆಂದು ತಿಳಿಯಬೇಕು. ಶಾಖಾಂತರೋದಾಹೃತ 'ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸೀತ' ಎಂಬ ವಚನವು ಪ್ರಥಮಾ ವಿಭಕ್ತ್ಯಂತವಾಗಿರುವುದಾದರೂ ಛಾಂದೋಗ್ಯದಲ್ಲಿ ಬರುವ 'ನಾಮ' 'ವಾಕ್' ಮೊದಲಾದ ಶಬ್ದಗಳು ದ್ವಿತೀಯಾವಿಭಕ್ತ್ಯಂತ ಪದಗಳಾಗಿವೆ.

ಭಾಷ್ಯದೀಪಿಕಾರರು ಈ ಆಶಯವನ್ನು ನಿರಾಕರಿಸುತ್ತಾರೆ- ಭಾಷ್ಯದಲ್ಲಿ ಉಲ್ಲೇಖಿಸಿದ 'ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸೀತ' ಎಂಬ ವಚನವು ಶಾಖಾಂತರ ವಚನವೆಂದು ಉದಾಹೃತವಾಗಿಲ್ಲ. ತತ್ತ್ವಪ್ರದೀಪದಲ್ಲಿ ಈ ಆನುಪೂರ್ವಿಯ ಶಾಖಾಂತರವಚನವಿದೆಯೆಂದು ಉಲ್ಲಿಖಿತವಾದರೂ 'ನ ಪ್ರತೀಕಾಧಿಕರಣ' ಭಾಷ್ಯದಲ್ಲಿ ಛಾಂದೋಗ್ಯೋಪನಿಷತ್ತಿನದಲ್ಲದ ಶಾಖಾಂತರವಚನವು ಇದೆಂದು ಹೇಳಲು ಆಧಾರ ಸಾಲದು.

ಫಲವಾಕ್ಯದಲ್ಲಿರುವ ನಪುಂಸಕಲಿಂಗವುಳ್ಳ ನಾಮ ಬ್ರಹ್ಮಪದಗಳು ಪ್ರಥಮಾಂತಗಳೆಂದು ಹೇಳಲು ಯಾವ ಅನುಪಪತ್ತಿಯೂ ಇಲ್ಲದಿರುವಾಗ, ಅವುಗಳನ್ನು ದ್ವಿತೀಯಾವಿಭಕ್ತ್ಯಂತಪದಗಳೆಂದು ಗ್ರಹಿಸಿ ಆಕ್ಷೇಪ- ಪರಿಹಾರ ವನ್ನು ವರ್ಣಿಸುತ್ತಿರುವುದು ಸೂಕ್ತವಲ್ಲ. ಅಜ್ಞಾನಮೂಲಕವೂ ಅಹುದು. ಈ ಬಗ್ಗೆ ಛಾಂದೋಗ್ಯವ್ಯಾಸತೀರ್ಥಿಯವಚನಗಳು ಅನುಸಂಧೇಯ ವಾಗಿವೆ- 'ನಾಮ ಬ್ರಹ್ಮೋಪಾಸ್ವ' (ಛಾಂದೋಗ್ಯೋಪ- ನಿಷತ್ತಿನದಲ್ಲದ ಪ್ರಮಾಣವಚನ) ಎಂಬಲ್ಲಿ ದ್ವಿತೀಯಾವಿಭಕ್ತ್ಯಂತ ಪದಗಳಿವೆಯೆಂದೂ 'ಸ ಯೋ ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸ್ತೆ' (ಛಾಂ.7.1.5) ಎಂಬ ಸ್ಥಳದಲ್ಲಿರುವ ನಾಮ-ಬ್ರಹ್ಮಾಪದಗಳು ಪ್ರಥಮಾವಿಭಕ್ತ್ಯಂತವೆಂದು ತಿಳಿಯಬೇಕು'. ಇಲ್ಲಿ ಎರಡೂ ಸ್ಥಳಗಳಲ್ಲಿ 'ನಾಮ-ವಾಕ್' ಇತ್ಯಾದಿ ಪದಗಳಿಗೆ ಅಭಿಮಾನಿ ದೇವತೆಗಳಲ್ಲಿ ಬ್ರಹ್ಮನನ್ನು ಉಪಾಸಿಸಬೇಕೆಂದು ಸಪ್ತಮೀವಿಭಕ್ತಿಯ ಅರ್ಥವನ್ನು ಸ್ವೀಕರಿಸಬೇಕು- '' 'ನಾಮ ಬ್ರಹ್ಮೋಪಾಸ್ವ' ಇತ್ಯಾದ್ಯುಕ್ತಾಃ ದ್ವಿತೀಯಾಃ, 'ಸ ಯೋ ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸ್ತೇ' (ಛಾಂ.7.1.5) ಇತ್ಯಾದ್ಯುಕ್ತಾಃ ಪ್ರಥಮಾಶ್ಚ ಸಪ್ತಮ್ಯರ್ಥ- ತಯಾ ವ್ಯಾಖ್ಯಾತಾಃ''

ಆದ್ದರಿಂದ ಭಾಷ್ಯದಲ್ಲಿ ಉಲ್ಲಿಖಿತವಾದ 'ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸೀತ' ಎಂಬ ವಚನವು ಛಾಂದೋಗ್ಯೋಪನಿಷತ್ತಿನಿಂದ ಉದಾಹೃತವಾಗಿದೆ ಎಂದು ನಿರ್ಧರಿಸಬಹುದು. ಆದರೆ ಈ ಅಧಿಕರಣದ ಬ್ರಹ್ಮತರ್ಕಪ್ರಮಾಣ ವಚನದಲ್ಲಿ 'ಪ್ರಥಮಾತ್ವತಃ' ಎಂಬುದಾಗಿ ಪದವಿದ್ದರೂ ಪ್ರಥಮಾವಿಭಕ್ತ್ಯಂತ ವಾದ ಪದದ ಜೊತೆಗೆ ದ್ವಿತೀಯಾವಿಭಕ್ತಿಯುಳ್ಳ ಪದಗಳಿರುವಾಗಲೂ ಅಲ್ಲಿ ಸಪ್ತಮೀವಿಭಕ್ತಿಯ ಅರ್ಥವನ್ನು ತೆಗೆದುಕೊಳ್ಳಬೇಕು. 'ಪ್ರಥಮಾತ್ವತಃ' ಎಂಬ ಪದಕ್ಕೆ 'ಅಜಹಲ್ಲಕ್ಷಣಯಾ' ದ್ವಿತೀಯಾದಿವಿಭಕ್ತ್ಯಂತ ಪದಗಳಿರು ವಾಗಲೂ ಎಂಬ ಅರ್ಥವು ಸಿದ್ಧವಾಗುತ್ತದೆ.

ತತ್ತ್ವಪ್ರದೀಪವಚನವು ಸಂದರ್ಭೋಚಿತವಾಗಿ ಪ್ರಥಮಾವಿಭಕ್ತ್ಯಂತವಾದ ಪದದ ಜೊತೆಗೆ ದ್ವಿತೀಯಾವಿಭಕ್ತ್ಯಂತವಾದ ಪದವಿರುವಾಗ ಸಪ್ತಮೀ ವಿಭಕ್ತ್ಯರ್ಥವನ್ನು ಸ್ವೀಕರಿಸುವುದನ್ನು ಅನುಮೋದಿಸುತ್ತದೆ. ಆದ್ದರಿಂದ 'ವಾಚಂ ಬ್ರಹ್ಮ' ಇತ್ಯಾದಿ ಸ್ಥಳಗಳಲ್ಲೂ ವಾಗ್‌ದೇವತೆಯಲ್ಲಿ ಬ್ರಹ್ಮೋಪಾಸನೆ ನಡೆಸಬೇಕೆಂದು ಅರ್ಥ ಹೇಳಲು ಸಾಧ್ಯವಾಗುವುದು. 'ಶಾಖಾಂತರೇ

ಪ್ರಥಮಾತ್ವಾತ್' ಎಂಬ ತತ್ತ್ವಪ್ರದೀಪವಚನವು ಛಾಂದೋಗ್ಯಕಿಂತ ಭಿನ್ನವಾದ ಬೇರೆ ಶಾಖೆಯಲ್ಲಿರುವ 'ನಾಮ ಬ್ರಹ್ಮೋಪಾಸೀತ' ಎಂಬ ವಿಧಿವಾಕ್ಯವನ್ನು ನಿರಾಕರಿಸುವುದಿಲ್ಲ. ಪ್ರಕೃತದಲ್ಲಿ ಆಚಾರ್ಯರಿಂದ ಉದಾಹೃತವಾದ 'ನಾಮ ಬ್ರಹ್ಮೇತ್ಯುಪಾಸೀತ' ಎಂಬ ವಚನವು ಛಾಂದೋಗ್ಯ ದಲ್ಲಿರುವುದೇ ಆಗಿದೆ.

ಇನ್ನೂ ಕೆಲವರ ವ್ಯಾಖ್ಯಾನ ಹೀಗಿದೆ-

'ಪ್ರಥಮಾತ್ವತಃ' ಎಂಬ ಪದಕ್ಕೆ ಅಜಹಲ್ಲಕ್ಷಣೆಯನ್ನು ಆಶ್ರಯಿಸಿ ವ್ಯಾಖ್ಯಾನಿಸಬೇಕಿಲ್ಲ. 'ಪ್ರಥಮಯೋಃ ಪೂರ್ವಸವರ್ಣಃ--' ಎಂಬ ಸೂತ್ರ-ವ್ಯಾಖ್ಯಾನದಲ್ಲಿ ವೈಯಾಕರಣರು ತೋರಿದ ದಾರಿಯಂತೆ, 'ಪ್ರಥಮಾತ್ವತಃ' ಎಂಬ ಪದಕ್ಕೆ 'ಪ್ರಥಮಾ ಚ ದ್ವಿತೀಯಾ ಚ ಪ್ರಥಮೇ ತಯೋರ್ಭಾವಃ ಪ್ರಥಮಾತ್ವಮ್' ಎಂಬುದಾಗಿ ವಿಗ್ರಹಮಾಡಿ ಪ್ರಥಮಾವಿಭಕ್ತ್ಯಂತವಾದ ಹಾಗೂ ದ್ವಿತೀಯಾವಿಭಕ್ತ್ಯಂತವಾದ ಎರಡು ಪದಗಳಲ್ಲಿ ಅಭೇದವು ಪ್ರತೀತವಾಗುವುದೆಂದು ವ್ಯಾಖ್ಯಾನಿಸಬಹುದು.

ಮತ್ತೆ ಕೆಲವರ ಅಭಿಪ್ರಾಯ ಹೀಗಿದೆ-

'ಮನೋ ಹಿ ಬ್ರಹ್ಮ ಮನ ಉಪಾಸ್ವ' (ಛಾಂ. 7. 3. 1.) ಇತ್ಯಾದ ಸ್ಥಳಗಳಲ್ಲಿ ಮನಸ್ಸೆಂಬ ಪ್ರತಿಮೆಯಲ್ಲಿ ಬ್ರಹ್ಮನನ್ನು ಉಪಾಸಿಸು ಎಂದೇ ಅರ್ಥವಾಗಿದೆ ಇಲ್ಲಿ 'ಮನೋಬ್ರಹ್ಮಪದಗಳು' ಪ್ರಥಮಾವಿಭಕ್ತ್ಯಂತವಾಗಿವೆ. ಇದರಂತೆ 'ನಾಮ ಹಿ ಬ್ರಹ್ಮ ವಾಗ್ ಹಿ ಬ್ರಹ್ಮ' ಇತ್ಯಾದಿಯಾಗಿ ವಾಕ್ಯಗಳನ್ನು ಸ್ವೀಕರಿಸಿ (ಊಹೆ ಮಾಡಿಕೊಂಡು) ನಾಮ ಮೊದಲಾದ ಪದಗಳಿಗೂ ಹಾಗೂ ಬ್ರಹ್ಮಪದಕ್ಕೂ ಪ್ರಥಮಾಂತತ್ವವೇ ಇದೆಯೆಂದು ತಿಳಿಸಲು 'ನಾಮಾದಿ ಪ್ರಾಣಪರ್ಯಂತಮುಭಯೋಃ ಪ್ರಥಮಾತ್ವತಃ' ಎಂಬ ವಚನ ಹೊರಟಿದೆ. 'ನಾಮ ಹಿ ಬ್ರಹ್ಮ ವಾಗ್ ಹಿ ಬ್ರಹ್ಮ' ಎಂಬುದಾಗಿ 'ಪಾಠ'ವಿದೆಯೆಂದು ಸಂಪ್ರದಾಯ ತಿಳಿದವರು ಹೇಳುತ್ತಾರೆ.

ಹೀಗೆ ಅನೇಕವ್ಯಾಖ್ಯಾನಗಳನ್ನು ಉಲ್ಲೇಖಿಸಿ ಸೂಕ್ತ ವಿವರಣೆಯನ್ನು ನೀಡಿ, ತಮ್ಮದೇ ಆದ ವಿಮರ್ಶೆಯ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ಭಾಷ್ಯವ್ಯಾಖ್ಯಾನ ಮಾಡುವುದು ಶ್ರೀಜಗನ್ನಾಥಯತಿಗಳ ವೈಶಿಷ್ಟವಾಗಿದೆ.

**ಟೀಕಾದ್ಯುಕ್ತಾರ್ಥ ಸಂಗ್ರಹ**

ಕರ್ಮಕ್ಷಯದ ವಿವರವು ಭಾಷ್ಯದೀಪಿಕೆಯಲ್ಲಿ ವಿವರವಾಗಿ ಮೂಡಿ ಬಂದಿದೆ. ತತ್ತ್ವಪ್ರಕಾಶಿಕೆಯ ಪ್ರಮೇಯ ಸಂಗ್ರಹದ ಜೊತೆಗೆ ಅನುವ್ಯಾಖ್ಯೋಕ್ತ ಪ್ರಮೇಯಗಳೂ ಇಲ್ಲಿ ನಿರೂಪಿತವಾಗಿವೆ. ಕೆಲವಡೆ ಟೀಕೆಯಲ್ಲಿ ಸೂಚಿತವಾದ ಅಪೂರ್ವಪ್ರಮೇಯಗಳನ್ನು ಇಲ್ಲಿ ವಿವರಿಸಲಾಗಿದೆ. ಪ್ರಕೃತ ಸಂಕ್ಷೇಪವಾಗಿ ಕರ್ಮಕ್ಷಯಸ್ವರೂಪವನ್ನು ನಿರೂಪಿಸುತ್ತೇವೆ:-

ಮುಕ್ತಿಯೋಗ್ಯ ಜೀವರಿಗೆ ಶ್ರೀಹರಿಯು ಕರುಣೆಯಿಂದ ತನ್ನ ಸಾಕ್ಷಾತ್ಕಾರ ನೀಡುವನು. ಯಾವರೂಪವು ಜೀವನೊಡನೆ ಅನಾದ್ಯನಂತ ಕಾಲದಲ್ಲಿ ಒಡನಾಡಿಯಾಗಿ ಸ್ವರೂಪದೇಹದಲ್ಲಿದ್ದು ನಿಯಾಮಕವಾಗಿದೆಯೋ ಅದನ್ನೇ 'ಬಿಂಬರೂಪ' ಎನ್ನುವರು. ಇದರ ಸಾಕ್ಷಾತ್ಕಾರವೇ ಮುಕ್ತಿಗೆ ಕಾರಣವೆನಿಸಿದೆ. ಅಪರೋಕ್ಷಜ್ಞಾನವೆಂಬ ಬೆಂಕಿಯು ಅನಾರಬ್ಧವಾದ ಪಾಪವನ್ನು ಭಸ್ಮ ಮಾಡುತ್ತದೆ. (ಸಂಚಿತಕರ್ಮವು ಅಮಂಗಲಫಲ ನೀಡದು) ಅಪರೋಕ್ಷಜ್ಞಾನದ ನಂತರದಲ್ಲಿ ಸಾಧಕನಾದ ಜೀವನಿಗೆ ಯಾವುದೇ ಪಾಪಗಳು ಅಂಟುವುದಿಲ್ಲ. ಪ್ರಾರಬ್ಧಕರ್ಮಫಲವನ್ನು ಮಾತ್ರವೇ ಅನುಭವಿಸಿ ಜೀವನು ಉತ್ತಮಲೋಕಗಳಲ್ಲಿ ಪ್ರಾರಬ್ಧಶೇಷವನ್ನು ಕಳೆದುಕೊಂಡು ನಂತರ ಮುಕ್ತನಾಗುವನು.

ಇನ್ನು 'ಕರ್ಮ'ದ ನಾನಾಮುಖಗಳನ್ನು ಗಮನಿಸುವಾ-

ಮುಕ್ತಿಯೋಗ್ಯರ ಕರ್ಮವನ್ನು ಎರಡು ಬಗೆಯಾಗಿ ವಿಂಗಡಿಸಬಹುದು- ಪುಣ್ಯ-ಪಾಪ ಎಂಬುದಾಗಿ. ಪುಣ್ಯಕರ್ಮವು ನಿವೃತ್ತ (ಅಕಾಮ್ಯ) ಪ್ರವೃತ್ತ(ಕಾಮ್ಯ) ಎಂಬುದಾಗಿ ಎರಡು ಬಗೆಯಾಗಿದೆ.

ಅನಿಷಿದ್ಧವಾದ ಕಾಮನೆಗಳೊಂದಿಗೆ ಕರ್ಮಮಾಡುವುದು 'ನಿಷ್ಕಾಮ' (ನಿವೃತ್ತ)ವೆನಿಸಿದೆ. ಅಪರೋಕ್ಷಜ್ಞಾನಕ್ಕಿಂತ ಪೂರ್ವದಲ್ಲಿ ಆಚರಿಸುವ ನಿಷ್ಕಾಮಕರ್ಮವು ಹೃದಯವನ್ನು ಶುಚಿಗೊಳಿಸಿ ತತ್ತ್ವಜ್ಞಾನದ ವಿಕಾಸಕ್ಕೆ ಕಾರಣವಾಗುವುದು. ಅಪರೋಕ್ಷಜ್ಞಾನಾನಂತರದ ಕರ್ಮವು ಮುಕ್ತಿಯಲ್ಲಿ ತನ್ನ ಯೋಗ್ಯತೆಗೆ ಅನುಗುಣವಾದ ಪೂರ್ಣಾನಂದವನ್ನು ಪಡೆಯಲು ಕಾರಣವಾಗುವುದು.

ಇನ್ನು ಕಾಮ್ಯಕರ್ಮ(ಪುಣ್ಯ)ದ ವಿಚಾರ ತಿಳಿಯೋಣ-

ಅಪರೋಕ್ಷಜ್ಞಾನಕ್ಕಿಂತ ಮುಂಚಿನ ಕಾಮ್ಯಪುಣ್ಯವು ಪ್ರಾರಬ್ಧ ಹಾಗೂ ಅಪ್ರಾರಬ್ಧವೆಂಬುದಾಗಿ ಎರಡು ಬಗೆಯಾಗಿದೆ. ಪ್ರಾರಬ್ಧವನ್ನು ಅನುಭವದ ಮೂಲಕವೇ ಕಳೆದುಕೊಳ್ಳಬೇಕು. ಅಪ್ರಾರಬ್ಧವಾದ ಕಾಮ್ಯಪುಣ್ಯವು ಇಷ್ಟ ಹಾಗೂ ಅನಿಷ್ಟವೆಂದು ಎರಡು ಬಗೆಯಾಗಿದೆ.

ಇಷ್ಟವಾದ ಕಾಮ್ಯಪುಣ್ಯವು ದೇಹಧಾರಣೆ- ಅನ್ನಪಾನಾದಿಲಾಭ ಜ್ಞಾನಾದಿ ಮಂಗಲ ಗುಣಗಳ ಅಭಿವ್ಯಕ್ತಿಕಾರಣವಾಗಿದೆ. ಅನಿಷ್ಟಕಾಮ್ಯಪುಣ್ಯವು ಸ್ವರ್ಗಾದಿ ಸುಖ ಸಾಧನವಾಗಿದೆ.

ಅಪರೋಕ್ಷಜ್ಞಾನಾನಂತರದ ಕಾಮ್ಯಪುಣ್ಯವೂ ಇಷ್ಟ - ಅನಿಷ್ಟವೆಂದು ಎರಡು ಬಗೆಯಾಗಿದೆ. ಇಂದ್ರನು ವೃತ್ರಾಸುರನ ನಾಶಕ್ಕಾಗಿ ನಾರಾಯಣ ವರ್ಮದ ಉಪದೇಶ ಪಡೆದು ಫಲ ಪಡೆದಿರುವುದು, ಅಪರೋಕ್ಷಜ್ಞಾನಿಗೂ ಕಾಮ್ಯಕರ್ಮವಿದೆಯೆಂಬುದಕ್ಕೆ ಸಾಕ್ಷಿಯಾಗಿದೆ. ಇದರಂತೆ ಯುಧಿಷ್ಠಿರನು, ಅಕ್ಷಯಪಾತ್ರೆಯನ್ನು ಸೂರ್ಯಾನುಗ್ರಹದಿಂದ ಪಡೆದ ಸಂಗತಿಯನ್ನು ಉಲ್ಲೇಖಿಸಬಹುದಾಗಿದೆ. ಕಾಮ್ಯವಾದ ಇಷ್ಟಪುಣ್ಯದಿಂದ ನಾನಾವಿಧ ಭೋಗ ಗಳನ್ನು ಅಪರೋಕ್ಷಜ್ಞಾನಿಯು ಪಡೆಯುತ್ತಾನೆ ಇದನ್ನೇ 'ಪುರು- ಷಾರ್ಥೋಽತಃ ಶಬ್ದಾತ್' (ಬ್ರ.ಸೂ. 3.4.1) 'ಯಂ ಯಂ ಲೋಕಂ ಮನಸಾ ಸಂವಿಭಾತಿ' (ಆಥರ್ವಣೋಪನಿಷತ್ 1.10) ಎಂಬ ಸೂತ್ರ ಮತ್ತು ಉಪನಿಷತ್ತು ವರ್ಣಿಸುತ್ತಿವೆ. ರಾಜಪದವಿ ಮೊದಲಾದ ಜ್ಞಾನಭಕ್ತಿ ಪ್ರತಿಬಂಧಕವಾದ ಸ್ಥಾನಗಳು ಅನಿಷ್ಟಪುಣ್ಯದ ಫಲರೂಪವಾಗಿವೆ.

ಅಥವಾ ಇದನ್ನು ಹೀಗೂ ವಿವರಿಸಬಹುದಾಗಿದೆ-

ಸಾಧಕರು ಕೆರೆ-ಬಾವಿ ಕಟ್ಟಿಸುವುದು, ಸಮಾಜಸೇವೆ ಮಾಡುವುದು ಇವೇ ಮೊದಲಾದ ಮಾಧ್ಯಮಗಳಿಂದ ಗಳಿಸಿದ ಪುಣ್ಯವನ್ನು 'ಅನಿಷ್ಟಪುಣ್ಯ'ವೆಂದು ಶಾಸ್ತ್ರಗಳು ಕರೆದಿವೆ. ಇಂತಹ ಪುಣ್ಯವನ್ನು ಜ್ಞಾನಿಗಳು ತಮ್ಮನ್ನು ಸೇವೆ ಮಾಡುವ ಸುಜನರಿಗೆ ಕರುಣಿಸಿ ಅನುಗ್ರಹಿಸುತ್ತಾರೆ. ಇನ್ನೊಬ್ಬರ ಕಲ್ಯಾಣ ಕ್ಕಾಗಿ ವಾಯುಸ್ತುತಿಪುರಶ್ಚರಣ, ಜಪ-ಹೋಮ ಕಾರ್ಯಗಳನ್ನು ಪುರೋಹಿತರು ಮಾಡಿ ಪುಣ್ಯವನ್ನು ಯಜಮಾನನಿಗೆ ಧಾರೆ ಎರೆಯುವಂತೆ, ಜ್ಞಾನಿಗಳ ಅನಿಷ್ಟಪುಣ್ಯವು ಅವರ ಅಪೇಕ್ಷೆಯಂತೆ ಸೇವಕರಿಗೆ, ಹಾಗೂ ಅವರ

ಪ್ರೀತಿವಾತ್ಸಲ್ಯಗಳಿಗೆ ಪಾತ್ರರಾದವರಿಗೆ ಸಂದಾಯವಾಗುತ್ತದೆ. ಮಹಾತ್ಮರ ಸೇವೆ, ಪಾಠ-ಪ್ರವಚನ, ಗ್ರಂಥಲೇಖನಗಳಿಂದ ಬರುವ ಪುಣ್ಯವನ್ನು 'ಇಷ್ಟ-ಪುಣ್ಯ'ವೆಂದು ಕರೆಯುತ್ತಾರೆ. ಇಂತಹ ಪುಣ್ಯವನ್ನು ಜ್ಞಾನಿಗಳು ತಾವೇ ಉಳಿಸಿಕೊಳ್ಳುತ್ತಾರೆ. ಅನುಭವದ ಮೂಲಕವೇ ಪ್ರಾರಬ್ಧಕರ್ಮದ ಅಂಟು ತೊಳೆದುಕೊಳ್ಳುತ್ತಾರೆ-

**'ಪ್ರಾರಬ್ಧಕರ್ಮಣೋಽನ್ಯಸ್ಯ ಜ್ಞಾನಾದೇವ ಪರಿಕ್ಷಯಃ ।'** (ಸ.ಸಂ. 4-2)

ಪ್ರಾರಬ್ಧಕರ್ಮವು ಹರಿಶರಣರಿಗೆ ದುಃಖದ ತೀವ್ರತೆಯನ್ನು ನೀಡಲಾರದು. ಬ್ರಹ್ಮಸೂತ್ರ ಹಾಗೂ ಭಾಗವತಗ್ರಂಥವು ಈ ಸತ್ಯವನ್ನು ಸಾರಿವೆ- **'ಉಪಮರ್ದಂ ಚ'** (ಬ್ರ.ಸೂ. 3-4-16), **'ನ ವೈ ಜನೋ ಜಾತು ಕಥಂಚನಾವ್ರಜೇತ್ ಮುಕುಂದಸೇವ್ಯನ್ಯವದಂಗಸಂಸೃತಿಮ್'** (ಭಾಗ. 1.5.19).

ಅಪರೋಕ್ಷಜ್ಞಾನವನ್ನು ಪಡೆದ ನಂತರವೂ ಜ್ಞಾನಿಗಳು ಅನಾಯಾಸವಾಗಿ ಒದಗಿ ಬಂದ ಸಂಪತ್ತಿನಿಂದ ಸಮಾಜೋಪಯೋಗಿ ಕಾರ್ಯಗಳನ್ನು ಮಾಡಿ ಪುಣ್ಯವನ್ನು ಗಳಿಸಬಹುದಾಗಿದೆ.

ಇದರಂತೆ ಪಾಪಕಾರ್ಯಗಳನ್ನು ಅಪರೋಕ್ಷಜ್ಞಾನಿಗಳು ಮಾಡುವುದು ಕಂಡಿದೆ. ಬ್ರಹ್ಮಹತ್ಯಾ-ಸುರಾಪಾನ-ಪರಸ್ತ್ರೀಸಂಗ ಮೊದಲಾದ ಮಹಾಪಾತಕ ಮಾಡಿದರೆ ಇದರಿಂದ ಅವರು ಅಶುಚಿಯಾಗಲೀ ಸಂಭಾಷಣೆಗೆ ಅನರ್ಹರಾಗಲೀ ಆಗುವುದಿಲ್ಲ. ದೇಹಾಂತರಪ್ರಾಪ್ತಿಗೆ ಈ ಪಾಪವು ಕಾರಣವಾಗುವುದಿಲ್ಲ. ಸಾಮಾನ್ಯವಾಗಿ ಅಪರೋಕ್ಷಜ್ಞಾನಿಗಳಿಗೆ ನಿಷಿದ್ಧ ಕಾರ್ಯದಲ್ಲಿ ಪ್ರವೃತ್ತಿಯಾಗುವುದಿಲ್ಲ- **'ಕದಾಚಿದಪಿ ನಾಧರ್ಮೇ ಬುದ್ಧಿರ್ವಿಷ್ಣುದೃಶಾಂ ಭವೇತ್ ।'** (ಗೀ.ಭಾ.) ಆದರೆ ಪ್ರಾರಬ್ಧ-ಪ್ರಮಾದಗಳಿಂದ ಅವರಿಂದ ನಿಷಿದ್ಧಕಾರ್ಯಗಳು ಸಂಭವಿಸುವವು.

ಈ ಪಾಪಕಾರ್ಯಗಳನ್ನು ಅಲ್ಪ-ಮಹತ್-ಅತಿಮಹತ್ ಎಂದು ವಿಂಗಡಿಸಲಾಗಿದೆ. ಪಾಪಕರ್ಮಗಳಲ್ಲಿ ಮೂರು ಬಗೆ ಇರುವಂತೆ ಅಧಿಕಾರಿಗಳಲ್ಲಿಯೂ ಉತ್ತಮ-ಮಧ್ಯಮ-ಅಧಮರೆಂಬುದಾಗಿ ತ್ರೈವಿಧ್ಯವಿದೆ.

ಉತ್ತಮಾಧಿಕಾರಿಗಳಾದ ದೇವತೆಗಳಿಗೆ 'ಅಲ್ಪಪಾಪ'ವು ಸರ್ವಥಾ ಹಾನಿಕಾರಕ ವಲ್ಲ. ಆದರೂ ಅಶುಭಕರ್ಮಗಳನ್ನು ಮಾಡದಿರುವುದರಿಂದ ಆನಂದದಲ್ಲಿ ಹೆಚ್ಚಳ ಇದೆ-

**'ಅಶುಭಾಭಾವಜೋನ್ನಾಹೋ ಮಹಾಧಿಕಾರಿಣಾಮಪಿ ।**
**ಅಶುಭೇ ಕೃತೇ ನ ಭವತಿ ತಾರತಮ್ಯಾಚ್ಚ ಸ ಸ್ಮೃತಃ ॥'** (ಭಾ.ತಾ. 5.6.5)

ದೇವತೆಗಳು ಮಹತ್ತರವಾದ ಬ್ರಹ್ಮಹತ್ಯಾದಿ ಪಾಪಗಳನ್ನು ಮಾಡಿದಲ್ಲಿ, ಅದರಿಂದ ದುಃಖ ಸಂಭವಿಸುವುದು. ಇದರ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ಪ್ರಬಲ ಪ್ರಾರಬ್ಧಕರ್ಮದ ಅಸ್ತಿತ್ವವನ್ನು ಅರಿಯಬೇಕು-

**'ಈಷತ್ಪ್ರಾರಬ್ಧಾನರ್ಥಸೂಚಕಂ ಚ ತದ್ ಭವತಿ ಮಹಚ್ಚೇತ್ ವೃತ್ರಹತ್ಯಾದಿವತ್ ।'** (ಗೀ.ಭಾ. 3.18)

ದೇವತೆಗಳಿಂದ ತಮಗಿಂತ ಮೇಲಿನ ಕಕ್ಷೆಯ ದೇವತೆಗಳ ದ್ರೋಹ (ಅಪಚಾರ) ಕೆಲವೊಮ್ಮೆ ಸಂಭವಿಸುವುದು. ಚಂದ್ರ ಹಾಗೂ ಸುಗ್ರೀವನು ತಮಗೆ ಪೂಜ್ಯಳಾದ ಸ್ತ್ರೀಯನ್ನು ಉಪಭೋಗಿಸಿದ ಕಾರಣ ಅವರಿಗೆ 'ಸ್ವೋತ್ತಮದ್ರೋಹ'ವಾಯಿತು. ಇದರಂತೆ, ಋಷಿಗಳು ದೇವತೆಗಳಿಗೆ ಶಾಪ ಕೊಡುವುದು. ದೇವತೆಗಳು ತಮಗಿಂತ ಮೇಲಿನ ಕಕ್ಷೆಯ ದೇವತೆಗಳಿಗೆ ಶಾಪ ಕೊಡುವುದು, 'ಸ್ವೋತ್ತಮದ್ರೋಹ'ಕ್ಕೆ ಉದಾಹರಣೆಯಾಗಿ ಕಾಣಬಹುದು. ಇಂತಹ ಪ್ರಸಂಗಗಳಲ್ಲಿ ನಾವು ಸೂಕ್ಷ್ಮ ಪ್ರಮೇಯವನ್ನು ಇಲ್ಲಿ ಅರಿಯಬೇಕು.

ದೇವತೆಗಳು ತಮ್ಮ ಯೋಗ್ಯತೆಗಿಂತ ಮಿಗಿಲಾದ ಸಾಧನೆ ಮಾಡುವುದಿದೆ. ಇದರಿಂದ ಅವರಿಗೆ ಮೇಲಿನ ಕಕ್ಷೆಯವರ ಆನಂದವನ್ನು ಮುಕ್ತಿಯಲ್ಲಿ ನೀಡಬೇಕಾಗುವುದು. ಇಂತಹ ಪ್ರಸಂಗದಲ್ಲಿ ಪರಮಾತ್ಮನು ಉತ್ತಮ ದ್ರೋಹವನ್ನು ನಿಮಿತ್ತ ಮಾಡಿ, ಯೋಗ್ಯತೆಗಿಂತ ಹೆಚ್ಚಿಗೆ ಸಂಗ್ರಹವಾದ ಪುಣ್ಯವನ್ನು ಕಳೆದು ಅವರ ಸಾಧನೆ-ಯೋಗ್ಯತೆಗಳಿಗೆ ಅನುಗುಣವಾಗಿ ಆನಂದವನ್ನು ಕರುಣಿಸುವನು. ಅವರ ಯೋಗ್ಯತೆಗೆ ತಕ್ಕ ಆನಂದವು ದೊರಕದಿರುವ ಸಂಭವವಿರುವುದಿಲ್ಲ-

**ಪ್ರಾಪ್ತಹ್ರಾಸೋ ಭವೇತ್ ಕ್ವಾಪಿ ಮಹತಾ ತು ವಿಕರ್ಮಣಾ ।**
**ಚಂದ್ರಸುಗ್ರೀವಯೋರ್ನೈವ ಸ್ವೋಚ್ಚದಾರಪರಿಗ್ರಹಾತ್ ।**
**ಪ್ರಾಪ್ತಹಾನಿರಭೂನ್ನೈವ ಕ್ಲೃಪ್ತಹಾನಿಃ ಕಥಂಚನ ॥**

(ಬ್ರ.ಸೂ.ಅನು. 3.4.3)

ಮಧ್ಯಮಾಧಿಕಾರಿಗಳಾದ ಋಷ್ಯಾದಿಗಳಿಗೆ ಮಹದಪರಾಧವು ಇಲ್ಲಿ ದುಃಖದಾಯಕವಾಗಿದ್ದು ಮುಕ್ತಿಯಲ್ಲಿ ಕಿಂಚಿತ್ ಆನಂದಹ್ರಾಸಕ್ಕೆ ಕಾರಣ ವಾಗುವುದು.

'ಆಧಿಕಾರಿಕಜೀವಾನಾಮೇವಮನ್ಯೇಷು ಚ ದ್ವಯಮ್ ।'

(ಭಾ.ತಾ. 5.6.5)

ಆದರೆ ಮನುಷ್ಯೋತ್ತಮರು 'ಸ್ವೋತ್ತಮದ್ರೋಹ'ವನ್ನು ಮಾಡಿದಲ್ಲಿ ನಿರ್ದಿಷ್ಟವಾದ ಆನಂದವನ್ನು ಮುಕ್ತಿಯಲ್ಲಿ ಪೂರ್ಣವಾಗಿ ಪಡೆಯಲಾರರು. ಅಲ್ಪಪ್ರಮಾಣದ ಹ್ರಾಸ (ಕೊರತೆ) ಉಂಟಾಗುವುದು.

'ಹ್ರಾಸೋಽಪಿ ಮಾನುಷಾದೀನಾಮಾನಂದಸ್ಯ ವಿಕರ್ಮಣಾ ।
ಭವೇನ್ಮುಕ್ತೌ ವಿಶೇಷೇಣ ಸ್ವೋಚ್ಚಾನಾಮಪರಾಧತಃ ॥'

(ಬ್ರ.ಸೂ. 3.4.3)

ಹೀಗೆ ಅಪರೋಕ್ಷಾನಂತರದ 'ಪಾಪ'ಗಳ ಲೇಪದ ಬಗ್ಗೆ ವಿವರವನ್ನು ತಿಳಿಯಬೇಕು.

ಇಲ್ಲಿಯವರೆಗೆ ಆನಂದಮಯ ಮುಕ್ತಿಪಡೆಯುವ ಸಾಧಕರ ವಿಚಾರ ನಡೆಯಿತು. ಕೇವಲದುಃಖಾನುಭವರೂಪವಾದ ಮುಕ್ತಿ ಪಡೆಯುವ ತಾಮಸರ ಪುಣ್ಯಪಾಪಗಳ ವಿಷಯದಲ್ಲಿ ಸೂತ್ರ-ಭಾಷ್ಯ-ಟೀಕೆಯಲ್ಲಿ ಬಂದ ಹಾಗೂ ಸೂಚಿತವಾದ ಅನೇಕ ವಿಷಯಗಳನ್ನು ಭಾಷ್ಯದೀಪಿಕಾಕಾರರು ಸಂಗ್ರಹಿಸಿದ್ದಾರೆ, ಜೊತೆಜೊತೆಗೆ ಜ್ಞಾನಿಗಳಿಗೆ ಅನ್ವಯಿಸಿದ ನಿಯಮ (ನ್ಯಾಯ)ಗಳನ್ನು ಹರಿದ್ವೇಷಗಳಿಗೆ (ತಮೋಯೋಗ್ಯರಿಗೆ) ಹೇಗೆ ವಿಪರೀತ ವಾಗಿ ಅನ್ವಯಿಸಿಕೊಳ್ಳಬೇಕೆಂದು ಹೃದಯಂಗಮವಾಗಿ ವಿವರಿಸಿದ್ದಾರೆ-

ಹರಿದ್ವೇಷಿಯಾದ ತಮೋಯೋಗ್ಯನಾದ ಜೀವನ ಅಪ್ರಾರಬ್ಧಪೂರ್ವ ಪುಣ್ಯವು ಹರಿದ್ವೇಷದ ಪರಾಕಾಷ್ಠೆಯನ್ನು ತಲುಪಿದಾಗ ವಿನಾಶ ಹೊಂದು ವುದು. ಬ್ರಹ್ಮಾಪರೋಕ್ಷವುಳ್ಳ ಸಾತ್ವಿಕಜೀವನಿಗೆ ಅಪರೋಕ್ಷಾನಂತರದಲ್ಲಿ 'ಪಾಪ'ಲೇಪವಾಗದಿರುವಂತೆ, ಹರಿದ್ವೇಷಿಗೆ ತನ್ನ ಯೋಗ್ಯತಾನುಗುಣವಾದ ಹರಿದ್ವೇಷದ ಮಟ್ಟವನ್ನು ತಲುಪಿದ ನಂತರ ಪುಣ್ಯಲೇಪವೂ ಆಗುವುದಿಲ್ಲ. ಈ ಅಂಶವು 'ಇತರಸ್ಯಾಪ್ಯೇವಮಸಂಶ್ಲೇಷಃ ಪಾತೇ ತು' ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ನಿರೂಪಿತವಾಗಿದೆ.

'ಅಗ್ನಿಹೋತ್ರಾದಿ ತು' (4.1.16) ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಸುಜೀವಿಯು ಅಪರೋಕ್ಷಜ್ಞಾನಕ್ಕಿಂತ ಮೊದಲು ಮಾಡಿದ ನಿಷ್ಕಾಮಪುಣ್ಯವು ಅಪರೋಕ್ಷಜ್ಞಾನಸಾಧನವೆಂದೂ ಅಪರೋಕ್ಷಾನಂತರದಲ್ಲಿ ನಡೆಸುವ ನಿಷ್ಕಾಮಕರ್ಮವು ಮುಕ್ತಿಯಲ್ಲಿ ಅವನ ಯೋಗ್ಯತೆಗೆ ಅನುಗುಣವಾದ ಆನಂದಾಭಿವೃದ್ಧಿಗೆ ಕಾರಣವೆಂಬ ಅಂಶ (ನ್ಯಾಯ)ವನ್ನು ಹರಿದ್ವೇಷಿಯ ವಿಷಯದಲ್ಲಿ ವಿಪರೀತವಾಗಿ ಅನ್ವಯಿಸಿಕೊಳ್ಳಬೇಕು. ಹೇಗೆಂದರೆ- ಯೋಗ್ಯತಾನುಗುಣವಾದ ಪರಿಪಕ್ವದ್ವೇಷಸ್ಥಿತಿಗಿಂತ ಮೊದಲು ಮಾಡಿದ ಪಾಪಗಳು ಯೋಗ್ಯತಾನುಗುಣವಾದ ದ್ವೇಷಪರಾಕಾಷ್ಠೆಗೆ ಕಾರಣವಾಗುತ್ತವೆ. ದ್ವೇಷಪರಾಕಾಷ್ಠೆಯ ತುತ್ತತುದಿಯನ್ನು ತಲುಪಿದಾಗ ನಂತರ ಮಾಡುವ ಪಾಪಗಳ ಫಲ- ತಮಃಪ್ರಾಪ್ತಿ.

ಇದರಂತೆ 'ಅತೋಽನ್ಯದಪಿ' (4.1.17)ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಜ್ಞಾನಪೂರ್ವ ಕಾಲೀನಕಾಮ್ಯ ಪುಣ್ಯ ಮತ್ತು ಅಪ್ರಾರಬ್ಧವಾದ ಅನಿಷ್ಟ ಪುಣ್ಯಕ್ಕೆ ನಾಶವನ್ನು ಅಪರೋಕ್ಷಾನಂತರದ ಕಾಮ್ಯಪುಣ್ಯಕ್ಕೆ ಅಶ್ಲೇಷರೂಪವಾದ ನ್ಯಾಯವು ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಇದನ್ನು ದ್ವೇಷಿಗಳ ವಿಷಯದಲ್ಲಿ ವಿಪರೀತವಾಗಿ ಅನ್ವಯಿಸಿಕೊಳ್ಳಬೇಕು. ದ್ವೇಷದ ಪರಾಕಾಷ್ಠೆಯನ್ನು ತಲುಪುವ ಮೊದಲಿನ ಕಾಮ್ಯವೂ ಅಪ್ರಾರಬ್ಧವೂ ಆದ ಅನಿಷ್ಟ ಪುಣ್ಯವು ನಾಶವಾಗುವುದಿಲ್ಲ. ಇದರಿಂದ ಅವರಿಗೆ ಉತ್ತಮಕುಲ ಜನ್ಮ ಅಧಿಕಾರ ಮುಂತಾದವು ದೊರಕುತ್ತವೆ. ಉದಾ- ದುರ್ಯೋಧನನಿಗೆ ಕುರುಕುಲದಲ್ಲಿ ಜನ್ಮ- ಅಧಿಕಾರ ಇತ್ಯಾದಿ. ಇದರಿಂದ ಶ್ರೀಕೃಷ್ಣಭೀಮರಿಗೆ ದ್ರೋಹವೆಸಗುವ ಮೂಲಕ ಪೂರ್ಣವಾದ ತಮಃಪ್ರಾಪ್ತಿಯಾಗುವುದು. ಇಷ್ಟವಾದ ಪುಣ್ಯವು ವಿನಾಶಹೊಂದುವುದು. ದ್ವೇಷಪರಾಕಾಷ್ಠೆ ತಲುಪಿದ ನಂತರ ಮಾಡುವ ಕಾಮ್ಯಪುಣ್ಯವು ಅಪ್ರಾರಬ್ಧ ಹಾಗೂ ಅನಿಷ್ಟವಾದುದು ಅವರಿಗೆ ಅಲ್ಪಕಾಲ ಸುಖ ಫಲದಾಯಕವಾಗುವುದು. ಇಷ್ಟ ಪುಣ್ಯವು ಲೇಪವಾಗದು. ಮನುಷ್ಯಾಧಮರು ತಮ್ಮ ಯೋಗ್ಯತಾನುಗುಣವಾದ ಹರಿದ್ವೇಷದ ಪರಾಕಾಷ್ಠೆ ತಲುಪಿದ ನಂತರ ಅವರು ಆಕಸ್ಮಿಕವಾಗಿ ಮಾಡುವ ಅಕಾಮ್ಯಪುಣ್ಯಕರ್ಮವು ದುಃಖಾತಿಶಯವಾಗದಂತೆ ನೋಡಿಕೊಳ್ಳುವುದು. ಕಲ್ಯಾದಿದೈತ್ಯರು ದ್ವೇಷಪರಾಕಾಷ್ಠೆ ತಲುಪಿದ ನಂತರ ಅಕಾಮ್ಯಪುಣ್ಯಕರ್ಮ ಮಾಡಿದರೆ, ಅವರ ಯೋಗ್ಯತೆ ಮೀರಿ ಮಾಡಿದ ಪಾಪವು ನಾಶವಾಗುವುದು. ಇನ್ನು

'ಯದೇವ ವಿದ್ಯಯಾ' ಎಂಬ ಶ್ರುತಿ ವರ್ಣಿಸಿದಂತೆ ಅಪರೋಕ್ಷ ಜ್ಞಾನಿಕೃತವಾದ ಪುಣ್ಯವು ಅನಂತಫಲಕಾರಣವಾಗಿದೆ. ಈ ನಿಯಮವನ್ನು ದ್ವೇಷಿಗಳ ಪಾಪದ ವಿಷಯದಲ್ಲಿ ವಿಪರೀತವಾಗಿ ಅನ್ವಯಿಸಿಕೊಳ್ಳಬೇಕು- ದ್ವೇಷಿಗಳ ಪಾಪವು ತಮಃಪ್ರವೇಶದಲ್ಲಿ ಪರ್ಯವಸಾನಗೊಳ್ಳುವುದು. ಹೀಗೆ ಮೂರು ಸೂತ್ರಗಳಲ್ಲಿ ನಿರೂಪಿತನ್ಯಾಯಗಳನ್ನು ಹರಿದ್ವೇಷಿಗಳ ವಿಷಯದಲ್ಲಿ ವಿಪರೀತವಾಗಿ ವ್ಯಾಖ್ಯಾನಿಸಿಕೊಳ್ಳಬೇಕು. ಈ ವಿಷಯಗಳು ಭಾಷ್ಯದೀಪಿಕೆಯಲ್ಲಿ ಅತ್ಯಂತ ಮನೋಜ್ಞವಾಗಿ ಮೂಡಿಬಂದಿವೆ.

**ಲಯಕ್ರಮ**

ಭಾಷ್ಯದೀಪಿಕಾಕಾರರು 'ಅತ್ರಾಯಂ ಗುರುಪಾದೋಕ್ತಲಯಕ್ರಮಃ' ಎಂಬುದಾಗಿ ಟೀಕೋಕ್ತಲಯಕ್ರಮವನ್ನೇ ಸರಳವಾಗಿ ವಿವರಿಸಿದ್ದಾರೆ. ಆ ಕ್ರಮವನ್ನು ಹೀಗೆ ಅರಿಯ ಬಹುದಾಗಿದೆ- ಮನುಷ್ಯೋತ್ತಮರು, ನಿರ್ಋತಿಯಲ್ಲಿ ಇವರಿಗೆ ಯಮನಲ್ಲಿ ಪ್ರವೇಶವಾಗುವುದು. ಯಮನು, ವೈವಸ್ವತ ಮನು ಪ್ರಿಯವ್ರತಾದಿ ಚಕ್ರವರ್ತಿಗಳು ಹಾಗೂ ಪಿತೃಗಣದೊಂದಿಗೆ ಸ್ವಾಯಂಭುವ ಮನುವಿನಲ್ಲಿ ಲಯ ಹೊಂದುವನು. ಋಭುಗಳಿಗೆ ಪೃಥಿವಿಯಲ್ಲಿ ಲಯ. ಸಾಧ್ಯರಿಗೆ ಆಕಾಶಮಾನಿಯಲ್ಲಿ ಲಯ. ಅಗ್ನಿಪುತ್ರರಿಗೆ ಅಗ್ನಿಯಲ್ಲಿ ಲಯ. ಸ್ವಾಯಂಭುವ ಮನು ಅಗ್ನಿ ಮೊದಲಾದವರು ಸೂರ್ಯನನ್ನು ಪ್ರವೇಶಿಸಿ ತಮ್ಮ ದೇಹವನ್ನು ತೊರೆಯುವರು. ಸೂರ್ಯ, ವಿನಾಯಕ ಮೊದಲಾದವರು ಬೃಹಸ್ಪತಿಯಲ್ಲಿ ಲಯ ಹೊಂದುವರು. ಭೃಗು ಮೊದಲಾದ ಋಷಿಗಳಿಗೆ ದಕ್ಷನಲ್ಲಿ ಲಯವಿದೆ. ಬೃಹಸ್ಪತಿ, ಮನು, ದಕ್ಷ,ಮರುದ್ಗಣ ಹಾಗೂ ಶಚೀದೇವಿಗೆ ಇಂದ್ರನಲ್ಲಿ ಲಯ. ಇಂದ್ರನು ಗರುಡನ ಮಡದಿಯಾದ ಸೌಪರ್ಣಿಯಲ್ಲಿಯೂ, ಅವಳು ಗರುಡನಲ್ಲಿಯೂ ಪ್ರವೇಶವನ್ನು ಹೊಂದುತ್ತಾಳೆ. ಇದನ್ನು 'ಗರುಡ ಮಾರ್ಗ'ವೆಂದು ಕರೆಯಲಾಗಿದೆ.

ಇದರಂತೆ ಇನ್ನೊಂದು ಮಾರ್ಗವಿದೆ. ಗಂಧರ್ವರು ಕುಬೇರನಲ್ಲಿ, ಶತಸ್ಥದೇವತೆಗಳು ಮತ್ತು ಅಶ್ವಿನೀದೇವತೆಗಳು ವರುಣನಲ್ಲಿ, ಕುಬೇರ ಹಾಗೂ ವರುಣನು ಸೋಮನಲ್ಲಿಯೂ, ಸೋಮ ವಿಷ್ವಕ್ಸೇನ ಮೊದಲಾದವರು ಅನಿರುದ್ಧನಲ್ಲಿಯೂ, ರತಿ, ಅನಿರುದ್ಧ ಹಾಗೂ ಸನಕಾದಿಗಳು

ಕಾಮದೇವನಲ್ಲಿಯೂ, ಕಾಮದೇವನು ಶೇಷನ ಮಡದಿಯಾದ ವಾರುಣಿಯಲ್ಲಿಯೂ, ವಾರುಣಿಯು ಶೇಷನಲ್ಲಿಯೂ ಪ್ರವೇಶವನ್ನು ಪಡೆಯುತ್ತಾಳೆ. ಇದನ್ನು 'ಶೇಷಮಾರ್ಗ'ವೆಂದು ವರ್ಣಿಸಲಾಗಿದೆ. ಹೀಗೆ ಗರುಡ-ಶೇಷರನ್ನು ಸೇರಿದ ದೇವತೆಗಳ ಗುಂಪು ಅಂತಿಮವಾಗಿ ಸರಸ್ವತಿಯ ಮೂಲಕ ಬ್ರಹ್ಮದೇವರನ್ನು ಅನಂತರ ಲಕ್ಷ್ಮೀದೇವಿಯನ್ನು ಸೇರಿಕೊಂಡು ನಾರಾಯಣನ ಉದರದಲ್ಲಿ ವಿಲೀನವಾಗುವುದು. **'ವಾಙ್ಮನಸಿ ದರ್ಶನಾತ್ ಶಬ್ದಾಚ್ಚ'** (ಬ್ರ.ಸೂ. 4-1), **'ಅತ ಏವ ಚ ಸರ್ವಾಣ್ಯನು'** (ಬ್ರ.ಸೂ. 4-2-3), **'ಸೋऽಧ್ಯಕ್ಷೇ ತದುಪಗಮಾದಿಭ್ಯಃ'** (ಬ್ರ.ಸೂ. 4-2-4), **'ಭೂತೇಷು ತಚ್ಛ್ರುತೇಃ'** (ಬ್ರ.ಸೂ. 4-2-5) ಇತ್ಯಾದಿ ಸೂತ್ರಗಳಲ್ಲಿ ಈ ಪ್ರಮೇಯವು ಪ್ರತಿಪಾದಿತವಾಗಿದೆ.

**ಸೂಕ್ಷ್ಮವಿವೇಚನೆ-**

ಅಭಾವಾಧಿಕರಣ (4.4.10)ದಲ್ಲಿ ಮುಕ್ತರಿಗೆ ಭೋಗವನ್ನೊಪ್ಪಿದರೆ ಬರಬಹುದಾದ ಅನುಪಪತ್ತಿಯನ್ನು ವಿಮರ್ಶಿಸಲಾಗಿದೆ. ಅಂತಿಮವಾಗಿ ದೇಹಾಭಿಮಾನವಿಲ್ಲದ ಕನಸಿನಲ್ಲಿ ಭೋಗಾನುಭವವಿರುವಂತೆ ಮುಕ್ತಿಯಲ್ಲಿ ಜಡದೇಹವಿಲ್ಲದಿದ್ದರೂ ಭೋಗಾನುಭವ ಸಾಧ್ಯವಿದೆ. ಭೋಗಾನುಭವಕ್ಕೆ ಶರೀರದ ಅಗತ್ಯವಿದೆ. ಮುಕ್ತರಿಗೆ ಸ್ವರೂಪಭೂತವಾದ ಚಿದಾನಂದ ಮಯವಾದ ಶರೀರವಿದ್ದೇ ಇದೆ. ಆದ್ದರಿಂದ ಅವರಿಗೆ ಭೋಗವು ಯುಕ್ತವಾಗಿದೆ. ಆದರೂ ಶುದ್ಧಸತ್ವಾತ್ಮಕವಾದ ಜಡದೇಹಗಳನ್ನು ಮುಕ್ತರು ಸ್ವೇಚ್ಛೆಯಿಂದ ಭೋಗಕ್ಕಾಗಿ ಪಡೆಯುವುದು ಮತ್ತು ತೊರೆಯುವುದು ಇದೆ. ಆದರೆ ಜಡದೇಹವನ್ನು ಮುಕ್ತರು ಸ್ವೀಕರಿಸಿದರೂ ಅದರ ಯಾವ ವಿಕಾರಗಳೂ ಅವರಿಗೆ ಇರುವುದಿಲ್ಲ ಎಂದು ನಿರೂಪಿಸಲಾಗಿದೆ.

ಈ ಪ್ರಸಂಗದಲ್ಲಿ ಭಾಷ್ಯದೀಪಿಕಾಚಾರ್ಯರು ಮುಕ್ತರಿಗೆ ಸ್ಥೂಲವಾದ ಭೌತಿಕದೇಹದಿಂದ ಮುಕ್ತಿ ಇದೆಯೆಂದು ವಿವರಿಸುವುದರ ಜೊತೆಗೆ ಮುಕ್ತಿಯಲ್ಲಿ ಸ್ವರೂಪದೇಹಕ್ಕೆ ವೃದ್ಧಿ ಇದೆಯೆಂಬ ಅಪೂರ್ವಪ್ರಮೇಯವನ್ನು ಬೃಹದ್‌ಭಾಷ್ಯದ ಮತ್ತು ಆದರ ವ್ಯಾಖ್ಯಾನವಾದ ವ್ಯಾಸತೀರ್ಥೀಯ ವಚನವನ್ನು ಉದ್ಧರಿಸಿ ನಿರೂಪಿಸಿದ್ದಾರೆ-

'ಸಂಸಾರವಸ್ಥೆಯಲ್ಲಿ ಅಣುರೂಪನಾದ ಜೀವನ ತೇಜಸ್ಸು ಅಲ್ಪ

ವಾಗಿರುತ್ತದೆ. ಆದರೆ ಮುಕ್ತಿಯಲ್ಲಿ ಅಣುವಾದ ಜೀವಸ್ವರೂಪವನ್ನು ಹೆಚ್ಚಿದ ಪರಿಮಾಣ ಮತ್ತು ತೇಜಸ್ಸುಳ್ಳದ್ದಾಗಿ ಮಾಡುತ್ತಾನೆ' (ಬ್ರಹ್ಮವೈವರ್ತ)

ಈ ಪ್ರಮಾಣ ವಚನವು ಭಾಷ್ಯದೀಪಿಕಾಕಾರರು ಹೀಗೆ ವಿವರಿಸುತ್ತಾರೆ-

ಜೀವನ ಚರಮಶರೀರದಲ್ಲಿರುವ ಸ್ಥೂಲತೆಯನ್ನು ಮುಕ್ತಿಯಲ್ಲಿರುವ ಸ್ವರೂಪದೇಹಕ್ಕೆ ಪರಮಾತ್ಮನು ಕರುಣಿಸುವನು. ಹೇಗೆ ಹತ್ತಿಯ ಉಂಡೆಯನ್ನು ಹಿಂಜಿ ಬೃಹದಾಕಾರ ನೀಡಲಾಗುವುದೋ ಹಾಗೆಯೇ ಜೀವಸ್ವರೂಪಕ್ಕೂ ಸ್ಥೂಲತೆ ಇದೆ''

ಹೀಗೆ ಹೇಳಿದಾಗ ಒಂದು ಸಮಸ್ಯೆ ಇದೆ. ಜೀವನಿಗೆ ಸ್ಥೂಲತೆಯನ್ನು ಒಪ್ಪಿದರೆ ವಿಕಾರವನ್ನು ಅಂಗೀಕರಿಸಿದಂತಾಗುವುದು. ಯಾವುದು ವಿಕಾರಿಯೋ ಅದು ಅನಿತ್ಯವಾಗಿದೆ. ಆದ್ದರಿಂದ ಜೀವಸ್ವರೂಪವೂ ಅನಿತ್ಯ ವಾಗುವ ಪ್ರಸಕ್ತಿ ಇದೆ.

ಈ ಸಂದೇಹವನ್ನು ನ್ಯಾಯಸುಧೆ-ಗೀತಾಭಾಷ್ಯ ಪ್ರಮೇಯದೀಪಿಕೆಯ ಆಧಾರದಿಂದ ನವಿರಾಗಿ ಪರಿಹರಿಸಿದ್ದಾರೆ-

'ಜೀವನ ಸ್ವರೂಪದಲ್ಲಿ ವಿಕಾಸವನ್ನು ಒಪ್ಪಿದರೂ ಜೀವನಿಗೆ ಅನಿತ್ಯತ್ವ-ಪ್ರಸಕ್ತಿ ಇರುವುದಿಲ್ಲ. ಜೀವನಲ್ಲಿರುವ ಯಾವದ್ ಧರ್ಮಭಾವಿಯಾದ (ಅವಿಭಾಜ್ಯವೂ ನಿತ್ಯವೂ ಆದ) ಧರ್ಮಗಳಿಗೆ ವಿನಾಶ ಒಪ್ಪಿದರೆ ಮಾತ್ರ ಜೀವನಿಗೆ ಅನಿತ್ಯತ್ವ ಬರುವ ಸಂಭವವಿದೆ. ಆದರೆ ಪರಮಾತ್ಮನು ತನ್ನ ಅಚಿಂತ್ಯಶಕ್ತಿಯಿಂದ ಜೀವಸ್ವರೂಪದಲ್ಲಿ ವಿಕಾಸನೀಡಿ ಭೋಗವನ್ನು ನೀಡುವನೆಂಬ ಪಕ್ಷದಲ್ಲಿ ಯಾವುದೇ ಜೀವನ ಸಹಜಧರ್ಮಕ್ಕೆ ವಿನಾಶವನ್ನು ಒಪ್ಪಿದಂತಾಗುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಜೀವನಿಗೆ ಅನಿತ್ಯತ್ವ ಪ್ರಸಕ್ತಿ ಇರುವುದಿಲ್ಲ.

ಹೀಗೆ ಸೂಕ್ಷ್ಮವಾದ ಉತ್ತರಪ್ರಸ್ಥಾನದ ಕೃತಿಗಳ ವಿಷಯಗಳನ್ನು ನಿರೂಪಿಸಿ ಓದುಗರ ಚಿಂತನೆಯಮಟ್ಟವನ್ನು ವಿಶದಗೊಳಿಸುತ್ತಾರೆ.

ಹೀಗೆ, 'ಸ್ವಾಪ್ಯಯಸಂಪತ್ತ್ಯೋರನ್ಯತರಾಪೇಕ್ಷಮಾವಿಷ್ಕೃತಂ ಹಿ' (4.4.16) ಮೊದಲಾದ ಸೂತ್ರಗಳಲ್ಲಿ ಬಹುಮುಖವ್ಯಾಖ್ಯಾನದ ಜೊತೆಗೆ ಸೂಕ್ಷ್ಮವಿವೇಚನೆ ಕಾಣಬಹುದಾಗಿದೆ.

**ವಿರೋಧ ಪರಿಹಾರ**

'ಪ್ರತ್ಯಕ್ಷೋಪದೇಶಾದಿತಿ ಚೇನ್ನಾಧಿಕಾರಿಕಮಂಡಲಸ್ಥೋಕ್ತೇಃ' (4.4.19) ಸೂತ್ರ ವ್ಯಾಖ್ಯಾನಪ್ರಸಂಗದಲ್ಲಿ ಭಾಷ್ಯಕಾರರು 'ಆತ್ಮತ್ವರೂಪ ಏಕಗುಣೋಪಾಸಕರು ಇಲ್ಲಿಯೇ ಮುಕ್ತಿ ಹೊಂದುವರು, ಇವರಿಗೆ ಬ್ರಹ್ಮನಾಡಿ ಅಥವಾ ಅದರ ಪ್ರಭೇದವಾದ ನಾಡಿಗಳಿಂದ ಉತ್ಕ್ರಮಣ ವಿಲ್ಲ'' ಎಂದಿದ್ದಾರೆ.

ಇಲ್ಲಿ ತುಂಬ ಶಂಕೆಗಳು ಮೂಡುತ್ತವೆ ಮುಕ್ತಿಯೆಂದರೆ ಎಲ್ಲರೂ ಶ್ವೇತದ್ವೀಪ-ಅನಂತಾಸನ-ವೈಕುಂಠಲೋಕಗಳಿಗೆ ಹೋಗುವರೆಂದು ಭ್ರಮೆ ಸಾಮಾನ್ಯ ಜನರಿಗಿರುತ್ತದೆ. ಭಾಷ್ಯದೀಪಿಕಾಚಾರ್ಯರು ಈ ಪ್ರಸಂಗದಲ್ಲಿ ಅನೇಕ ಪ್ರಮಾಣಗಳನ್ನು ಉಲ್ಲೇಖಿಸಿ ಆಚಾರ್ಯರ ಅಂತರಂಗವನ್ನು ತೆರೆದಿಟ್ಟಿದ್ದಾರೆ-

ಆತ್ಮತ್ವರೂಪವಾದ ಏಕಗುಣೋಪಸಕಾರದ ಕೆಲವು ಜೀವರು ಶ್ರೀಹರಿಯನ್ನು ಉಪಾಸಿಸಿ, ಸಾಕ್ಷಾತ್ಕರಿಸಿಕೊಂಡು, ಪ್ರಾರಬ್ಧಕರ್ಮವನ್ನು ಅನುಭವಿಸಿ ಭೂಲೋಕದಲ್ಲಿಯೇ ಭೌತಿಕದೇಹದಿಂದ ಬಿಡುಗಡೆ ಪಡದು ಇಲ್ಲಿಯೇ ಸ್ವರೂಪ ಸುಖವನ್ನು ಅನುಭವಿಸುತ್ತಾರೆ. ಬ್ರಹ್ಮನಾಡೀ ಅಥವಾ ಇತರನಾಡಿಗಳಿಂದ ಅವರಿಗೆ ಉತ್ಕ್ರಮಣವಿಲ್ಲ.

ಹಾಗಾದರೆ, 'ತದೋಕಾಗ್ರಜ್ವಲನಂ'(4.2.17) ಎಂಬ ಸೂತ್ರ ವಿರೋಧಬರುವುದಲ್ಲವೆ? ಇಲ್ಲಿ ನಾಡಿಯಮೂಲಕ ಜೀವನಿಗೆ ಉತ್ಕ್ರಮಣವನ್ನು ವರ್ಣಿಸಲಾಗಿದೆ.

ನಿಜ; ಆದರೆ-

'ಕೇಚಿತ್ತು ಮಾನುಷಾ ಮುಕ್ತಿಮನುತ್ಕ್ರಮ್ಯೈವ ದೇಹತಃ ।
ದೇಹಪಾತೇ ತು ದೇಹಸ್ಯ ದೋಷಾನ್ ಭುಕ್ತ್ವೈವ ಸರ್ವಶಃ ॥
ಮರಣೋಚ್ಛೂನತಾದೀಂಸ್ತು ಸ್ವಕೀಯಾರಬ್ಧಕರ್ಮಜಾನ್ ।
ದೇಹೇ ಜೀರ್ಣೇ ತು ಗಚ್ಛಂತಿ ದೃಷ್ಟ್ವಾ ವಿಷ್ಣುಮನುಜ್ಞಯಾ ॥
ಪುನರತ್ರೈವ ತಿಷ್ಠಂತಿ ನಿತ್ಯಾನಂದೈಕಭೋಗಿನಃ ॥'

ಎಂಬ ಬೃಹಾದರಾಣ್ಯಭಾಷ್ಯೋದಾಹೃತಪ್ರಮಾಣವು ಏಕಗುಣೋಪಾಸಕರಿಗೆ ಭೂಲೋಕದಲ್ಲಿಯೆ ಮೌಕ್ತಾನಂದವನ್ನು ಸಮರ್ಥಿಸುತ್ತಿದೆ. ಆದ್ದರಿಂದ

'ತದೋಕ್ಯೋಗ್ರಜ್ವಲನಂ' (4.2.17) ಎಂಬ ಸೂತ್ರದ ವಿವರಣೆಯು ಏಕಗುಣೋಪಾಸಕರನ್ನು ಹೊರತುಪಡಿಸಿ ಬೇರೆ ಜೀವರನ್ನು ಗಮನ ದಲ್ಲಿರಿಸಿ ಹೊರಟಿದೆ ಎಂದು ವಿರೋಧಪರಿಹಾರವನ್ನು ಅರಿಯಬೇಕು.

ಏಕಗುಣೋಪಾಸಕರು, ಪ್ರಲಯಕಾಲದಲ್ಲಿ ಎಲ್ಲರಂತೆ ಲಿಂಗದೇಹ ಭಂಗವನ್ನು ಹೊಂದಿ ಶ್ರೀಹರಿಯ ಉದರ ಪ್ರವೇಶಿಸಿ ನಂತರ ಸೃಷ್ಟಿಯಾದ ಮೇಲೆ ಶ್ವೇತದ್ವೀಪ ಪತಿಯಾದ ವಾಸುದೇವನನ್ನು ಕಂಡು ನಂತರ ಭೂಲೋಕ ದಲ್ಲಿಯೇ ಮೌಕ್ತ ಸುಖವನ್ನು ಅನುಭವಿಸುವರು.

ಇನ್ನು ಕೆಲವರು ಭಾಷ್ಯವಚನಕ್ಕೆ ಹೀಗೆ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಾರೆ- 'ಒಮ್ಮೆ ಬ್ರಹ್ಮನಾಡೀ ಪ್ರಭೇದ ನಾಡಿಯ ಮೂಲಕ ಉತ್ಕ್ರಾಂತಿಯನ್ನು ಪಡೆದು ಲಿಂಗಶರೀರಭಂಗ- ಹರಿಯ ಶರೀರಪ್ರವೇಶ- (ಲಯಕಾಲದಲ್ಲಿ) ಪರವಾಸುದೇವದರ್ಶನ ಮಾಡಿಕೊಂಡು ಒಮ್ಮೆ ಭೂಮಿಗೆ ಬಂದ ನಂತರ ಮತ್ತೆ ಎಲ್ಲೂ ಹೋಗುವುದಿಲ್ಲ.

ಕೆಲವರು ಆತ್ಮತ್ವವೆಂಬ ಒಂದೇ ಗುಣೋಪಾಸಕರಿಲ್ಲ ಎಲ್ಲರೂ ಸತ್ (ನಿರ್ದೋಷ) ಚಿತ್(ಜ್ಞಾನಮಯ) ಆನಂದ-ಆತ್ಮಾ (ಒಡೆಯ=ಸ್ವಾಮಿ) ಎಂಬ ನಾಲ್ಕು ಗುಣೋಪಾಸಕರೇ ಆಗಿರುತ್ತಾರೆ. ಆತ್ಮತ್ವಗುಣೋಪಾಸನೆ ಯನ್ನು ಮಾತ್ರವೇ ಹೇಳಿದ ಕಡೆಯಲ್ಲಿ ಉಪಲಕ್ಷಣಯಾ (ಅಜಹ- ಲ್ಲಕ್ಷಣಯಾ) ಸತ್ ಚಿತ್ -ಆನಂದವೆಂಬ ಮೂರು ಗುಣಗಳನ್ನೂ ತೆಗೆದು ಕೊಳ್ಳಬೇಕೆಂದು ಅಭಿಪ್ರಾಯಪಡುತ್ತಾರೆ. ಆದರೆ, ಆತ್ಮತ್ವರೂಪ ಏಕಗುಣೋಪಾಸಕರನ್ನು ಸಮರ್ಥಿಸುವ ಟೀಕಾ ಹಾಗೂ ಆನಂದಮಾಲಾ ಗ್ರಂಥದ ವಿರೋಧವು ಈ ಪಕ್ಷದಲ್ಲಿ ಅಪರಿಹಾರ್ಯ. ಆನಂದಮಾಲಾ- ಕಾರರಾದ ತ್ರೈವಿಕ್ರಮಾರ್ಯದಾಸರು ಹೀಗೆ ಹೇಳಿದ್ದಾರೆ- 'ಅಥ ಚತುರ್ಗುಣೋಪಾಸ್ತೇರಶಕ್ಯತ್ವೇ ಆನಂದಾದೀನಾಂ ಆತ್ಮತ್ವಗುಣೈಕೀ- ಕಾರೇಣಾಪಿ ಕಥಂಚಿದುಪಾಸ್ತಿರಸ್ತಿ।' ಇಲ್ಲಿ ಆನಂದಮಾಲಾಕಾರರು ಚತುರ್ಗುಣೋಪಾಸನೆಯಲ್ಲಿ ಅಶಕ್ತರಾದವರಿಗೆ ಏಕಗುಣೋಪಾಸನೆ ಯನ್ನು ಸಮರ್ಥಿಸಿದ್ದಾರೆ.

ಈ ಹಿನ್ನಲೆಯಲ್ಲಿ ಆತ್ಮತ್ವರೂಪಏಕಗುಣೋಪಾಸಕರನ್ನು ಒಪ್ಪಿ ಅವರಿಗೂ ಒಮ್ಮೆ ಶ್ವೇತದ್ವೀಪಗಮನವನ್ನು ಒಪ್ಪಲೇಬೇಕು. ಈ ಪ್ರಸಂಗದಲ್ಲಿ ಭಾಷ್ಯದೀಪಿಕೆಯಲ್ಲಿ ಅನೇಕ ಸೂಕ್ಷ್ಮವಿಷಯಗಳು ಚರ್ಚಿತವಾಗಿವೆ.

ಈ ನಾಲ್ಕನೆಯ ಅಧ್ಯಾಯದ ಕೊನೆಯಲ್ಲಿ ಸಮಗ್ರ ಅಧ್ಯಾಯಾರ್ಥವನ್ನು ಒಂದು ಪುಟದಲ್ಲಿ ಸುಂದರವಾಗಿ ಸಂಗ್ರಹಿಸಿರುವ ಅವರ ಕೌಶಲ ಅಸಾಧಾರಣವಾದುದು.

ಈ ಭಾಷ್ಯದೀಪಿಕೆ ಹೆಸರಿಗೆ ತಕ್ಕಂತೆ ಭಾಷ್ಯದ ಪ್ರತಿಪದಾರ್ಥದ ಮೇಲೆ ಬೆಳಕು ಚೆಲ್ಲುವುದರ ಜೊತೆಗೆ ಭಾಷ್ಯಕಾರರ ಅಂತರ್ಯವನ್ನು ಹೃದಯಂಗಮವಾಗಿ ವಿವರಿಸಿದೆ. ಇದರ ಅಧ್ಯಯನ - ಅಧ್ಯಾಪನಗಳು ವಿದ್ವಾಂಸರಿಗೆ ಮುದ ನೀಡುವಲ್ಲಿ ಸಂದೇಹವಿಲ್ಲ.

ಪೂರ್ಣಪ್ರಜ್ಞ ವಿದ್ಯಾಪೀಠದಲ್ಲಿ ಅನ್ನ-ವಸ್ತ್ರಗಳನ್ನು ನೀಡಿ, ಅನುಪಮ ಕೃಪೆಯಿಂದ ಶ್ರೀಸುಧಾಗ್ರಂಥವನ್ನು ಪಾಠ ಮಾಡಿ ಇಲ್ಲಿ ಸೇವೆ ಸಲ್ಲಿಸುವ ಅವಕಾಶ ಕಲ್ಪಿಸಿದ ಪರಮಪೂಜ್ಯ ಗುರುಗಳಾದ ಶ್ರೀವಿಶ್ವೇಶತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರಿಗೆ ಭಕ್ತಿಪೂರ್ವಕ ಸಾಷ್ಟಾಂಗ ಪ್ರಣಾಮಗಳನ್ನು ಅರ್ಪಿಸುತ್ತಿದ್ದೇನೆ.

ಸಂಶೋಧನ ಮಂದಿರದ ಅಧ್ಯಕ್ಷರೂ, ಪೂಜ್ಯ ಗುರುಗಳೂ ಆದ ಪ್ರೊ। ಡಿ. ಪ್ರಹ್ಲಾದಾಚಾರ್ಯರಿಗೆ ನನ್ನ ಗೌರವಪೂರ್ವಕ ನಮಸ್ಕಾರಗಳು.

ಈ ಕೃತಿಯನ್ನು ಹೊರತರುವಲ್ಲಿ ಎಲ್ಲ ಹಂತದಲ್ಲಿಯೂ ಪ್ರೀತಿಯಿಂದ ಸಹಕಾರವನ್ನು ನೀಡಿ ಮಾರ್ಗದರ್ಶನ ಮಾಡಿದ ಸಂಶೋಧನ ಮಂದಿರದ ನಿರ್ದೇಶಕರಾದ ಡಾ। ಎ.ವಿ. ನಾಗಸಂಪಿಗೆಯವರಿಗೆ ನನ್ನ ಗೌರವದ ವಂದನೆಗಳು.

ವಿ। ಕಡ್ಡಿ ಬದರೀನಾರಾಯಣಾಚಾರ್ಯರು 4ನೇ ಅಧ್ಯಾಯ' ಸೂತ್ರದೀಪಿಕೆಯ ಸಂಶೋಧಿತ ಭಾಗವನ್ನು ಇದರೊಡನೆ ಮುದ್ರಿಸಲು ನೀಡಿ ಉಪಕರಿಸಿದ್ದಾರೆ. ಅವರಿಗೆ ನನ್ನ ಗೌರವದ ವಂದನೆಗಳು. ಅಕ್ಷರ-ಸಂಯೋಜನೆ ಕಾರ್ಯವನ್ನು ನೆರವೇರಿಸಿದ ಶ್ರೀ ಅಂಜನಪ್ರಸಾದ್ ಹಾಗೂ ವಿ। ವ್ಯಾಸರಾಜ ಜೋಶಿಯವರಿಗೆ ನನ್ನ ವಂದನೆಗಳು.

ಈ ಕೃತಿಯ ಯಥಾಮತಿ ಸಂಶೋಧನೆಯನ್ನು ನಡೆಸಿದ್ದೇನೆ. ವಿದ್ವಾಂಸರು ಹಂಸಕ್ಷೀರನ್ಯಾಯದಿಂದ ಈ ಪ್ರಯತ್ನವನ್ನು ಅಭಿನಂದಿಸುವರೆಂದು ನಂಬುತ್ತೇನೆ.

ವಿ। ವೆಂಕಟರಮಣ ಉಪಾಧ್ಯಾಯ

**यावद्देहभावित्वात्** रश्मिसम्बन्धस्य यावच्छरीरभावित्वात् । रात्रावपि ज्ञानिनः उत्क्रमणं युक्तम् । कुतः? **दर्शयति । चो** यतः । दर्शयति 'संसृष्टा'[१] इति श्रुतिः तथा प्रतिपादयति अत इत्यर्थः ॥ ४ ॥

## २१. ॐ अतश्चायनेऽपि हि दक्षिणे ॐ

**च**शब्दः प्रतिज्ञाद्वयसमुच्चये । **अपि** 'दक्षिणे मरणात्'[२] इति स्मृतिसत्वेऽपि । **दक्षिणे अयने** दक्षिणायनकाले । ज्ञानिनः उत्क्रान्तिर्युक्ता । कुतः? **अतः** सौररश्मिसहस्रनाडीसम्बन्धस्य तदाऽपि सत्वात् । **हि** यतः । एवं अतः दक्षिणायनदृष्टान्तेन रात्रावुत्क्रान्त्यभावो न वाच्य इत्यर्थः ॥ ५ ॥

॥ योग्यधिकरणम् ॥ १० ॥

## २२. ॐ योगिनः प्रति स्मर्येते स्मार्ते चैते ॐ

**चो** यतः । **एते** ब्रह्मचन्द्रगती । **योगिनः प्रति** ज्ञानकर्मयोगिनः प्रति । **स्मर्येते** स्मृत्या उच्येते । **स्मार्ते च** स्वानुस्मृतिसाध्ये च । 'गति–'[३] इत्यादिना स्मर्येते । अतस्तयोर्न केवलं कालादिकृतत्वमित्यर्थः ॥ १ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥**

—०—

१. '**संसृष्टा** वा एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरमत एतैः पश्यत्येतैरुत्क्रामत्येतैः प्रवर्तते' (माध्यन्दिनायनश्रुतिः)

२. '**दक्षिणे मरणाद्** याति स्वर्गं ब्रह्मोत्तरायणे '

३. '**गत्यनुस्मरणाद्** ब्रह्म चन्द्रं वा गच्छति ध्रुवम् ।
अननुस्मरतः काले मरणं प्राप्य नैव गतिः' (अध्यात्मे)

# चतुर्थाध्यायस्य तृतीयः पादः

॥ अर्चिराद्यधिकरणम् ॥ १ ॥

## १. ॐ अर्चिरादिना तत्प्रथितेः ॐ

उत्क्रान्तो ज्ञानी **अर्चिरादिना** मार्गेण गच्छति । कुतः? **तत्प्रथितेः** तस्य 'तेऽर्चिषमभिसम्भवन्ति'[१] इति श्रुतौ तस्यार्थस्य प्रसिद्धत्वादित्यर्थः ॥ १ ॥

॥ वायुशब्दाधिकरणम् ॥ २ ॥

## २. ॐ वायुशब्दादविशेषविशेषाभ्याम् ॐ

**अविशेषविशेषाभ्यां** वायोः प्राप्यत्वश्रुतेः उभयपर्यालोचनया वायोः द्वितीय-प्राप्यत्वमेवेत्यर्थः ॥ १ ॥

॥ तटिदधिकरणम् ॥ ३ ॥

## ३. ॐ तटितोऽधि वरुणः सम्बन्धात् ॐ

**तटितोऽधि** तटित्प्राप्त्यनन्तरं **वरुणः** प्राप्यः । कुतः? **सम्बन्धात्** वरुणस्य तटित उपरि सम्बन्धादित्यर्थः ॥ १ ॥

॥ आतिवाहिकाधिकरणम् ॥ ४ ॥

## ४. ॐ आतिवाहिकस्तल्लिङ्गात् ॐ

१. '**तेऽर्चिषमभिसम्भवन्त्यर्चिषो**ऽहरह्न आपूर्यमाणपक्षम्' (छां.५.१०.१)

पूर्वं द्वितीयप्राप्यत्वेनोक्तो **वायुरातिवाहिक** एव न मुख्यः। कुतः? **तल्लिङ्गात्**। पूर्वप्राप्यत्ववायुशब्दात्। अर्चिषः स इति रूपतद्धर्मादेरित्यर्थः ॥१॥

## ५. ॐ उभयव्यामोहात्तत्सिद्धेः ॐ

सप्तम्यर्थे पञ्चमी । **उभयव्यामोहात्** पूर्वोक्तवायुरातिवाहिको मुख्यो वा उत्तरोक्तवायुरातिवाहिको मुख्यो वेति सन्देहे। **तत्सिद्धेः** तेन दिवस्पतित्व-विशेषणेन तस्य उत्तरोक्तस्य वायोर्मुख्यत्वसिद्धेर्नानिर्णय इत्यर्थः ॥ २ ॥

॥ वैद्युताधिकरणम् ॥ ५ ॥

## ६. ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ

ज्ञानी **वैद्युतेनैव** विद्युत्पतिना वायुनैव ब्रह्म गच्छति। न तु मध्ये ततः वायोरन्यः प्राप्योऽस्ति। कुतः? **तच्छ्रुतेः** तस्य वायोरेव 'स एनान् ब्रह्म गमयति'[१] इति ब्रह्मगमयितृत्वश्रुतेरित्यर्थः ॥ १ ॥

॥ कार्याधिकरणम् ॥ ६ ॥

## ७. ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ

**कार्यं** उत्पत्तिमच्चतुर्मुखाख्यं ब्रह्म । वायुर्गमयतीति 'स' इति श्रुत्यर्थ इति **बादरि**राचार्यो मन्यते । कुतः? **अस्य** चतुर्मुखस्यैव । **गत्युपपत्तेः** प्राप्यत्वोपपत्तेरित्यर्थः ॥ १ ॥

## ८. ॐ विशेषितत्वाच्च ॐ

'यदि'[३] इति श्रुतौ प्राप्तव्यब्रह्मणश्चतुर्मुखपदेन **विशेषितत्वात् च** उक्तं युक्तमित्यर्थः ॥ २ ॥

---

१. (छां.४–१५–६) २. 'स एनान् ब्रह्म गमयति' (छां.४–१५–६)

३. '**यदि** ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मुखम्' (कौषारवश्रुतिः)

## ९. ॐ समाप्यात्तु तद्व्यपदेशः ॐ

यतस्तद्व्यपदेशः 'ब्रह्मवित्'[१] इति परब्रह्मप्राप्तिश्रुतिः । **सामीप्यात्** चतुर्मुखं प्राप्याचिरेण परं प्राप्नोतीति कालसामीप्यादेव । तदनुसृत्यैव प्रवर्तते । अतो न तद्विरोध इत्यर्थः ॥ ३ ॥

## १०. ॐ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॐ

**कार्यात्यये** महाप्रलये । **तदध्यक्षेण** सह कार्यस्वामिना चतुर्मुखेन सह । **अतः** चतुर्मुखात् । **परं** उत्तमं ब्रह्म । ज्ञानी गच्छति । **अभिधानात्** तथा श्रुतेरित्यर्थः ॥ ४ ॥

## ११. ॐ स्मृतेश्च ॐ

ब्रह्मणेति **स्मृतेर्विद्यमानत्वात् च** ज्ञानी चतुर्मुखेन सह परं प्राप्नोतीति सिद्ध्यतीत्यर्थः ॥ ५ ॥

## १२. ॐ परं जैमिनिर्मुख्यत्वात् ॐ

ज्ञानी **परं** ब्रह्मैव प्राप्नोति । न तु कार्यब्रह्म । कुतः? **मुख्यत्वात्** ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वादिति **जैमिनि**राचार्यो मन्यत इत्यर्थः ॥ ६ ॥

## १३. ॐ दर्शनाच्च ॐ

ज्ञानी परं ब्रह्मैव गच्छति । कुतः? तेन श्रवणादिभिः परब्रह्मण एव दृष्टत्वादित्यर्थः ॥ ७ ॥

## १४. ॐ न च कार्ये प्रतिपत्त्यभिसन्धिः ॐ

इतोऽपि ज्ञानिनः कार्यब्रह्मप्राप्तिरनुपपन्ना । कुतः? **चो** यतः । **कार्ये** ब्रह्मणि विषये ज्ञानिनः **प्रतिपत्त्यभिसन्धिः** प्रतिपत्तिः उपास्तिः । अभिसन्धिः प्राप्नुवानीतीच्छा **न** अस्ति । अत इत्यर्थः ॥ ८ ॥

---

१. 'ब्रह्मविदाप्नोति परम्' (तै.२-१)

## १५. ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ

वायु**रप्रतीकालम्बनान्** व्याप्तोपासकानधिकारिणः **नयति** परं ब्रह्म गमयति। अन्यान् **प्रतीकालम्बनान्** प्रतीकशब्दितदेहान्त उपासकान् कार्यब्रह्म नयतीति 'स एनान्'[१] इति श्रुत्यर्थ इति **बादरायणा**चार्यो मन्यते। कुतः? **उभयथा च दोषात्**। एनां व्यवस्थामनङ्गीकृत्य सर्वेषां एकैकप्राप्त्यङ्गीकारे कार्य-ब्रह्मपरब्रह्मप्राप्त्यङ्गीकारे कार्यब्रह्मपरब्रह्मप्राप्तिपक्षद्वयोक्तदोषप्राप्तेः। ननु 'यत्प्राप्तुरभिवाञ्छिति तत्प्राप्नोति'[२] इति वचनात् तत्तदिच्छामात्रेण तत्तत्प्राप्ति-सम्भवान्नोक्तव्यवस्थाङ्गीकार्येत्यत आह– **तत्क्रतुश्चेति**। अनेन 'स यथा कामो भवति तत्क्रतुर्भवति'[३] इत्यादिश्रुतिर्गृह्यते। **च**शब्दो यत इत्यर्थे। यतः स यथेति श्रुतिस्तत्तत्प्राप्तीच्छामात्रेण तत्तत्प्राप्तिं प्रतिषिध्य तज्ज्ञानोपासनापरोक्षैरेव तत्प्राप्तिं वक्ति। अतस्तत्तदिच्छामात्रेणैव न तत्प्राप्तिर्युज्यते इत्यर्थः॥ ९॥

## १६. ॐ विशेषं च दर्शयति ॐ

**चो** यतः। 'अन्तःप्रकाशा'[४] इति श्रुतिः केचनाप्रतीकालम्बनाः केचन प्रतीकालम्बना इति **विशेषं** भेदं **दर्शयति** प्रतिपादयति। तस्माच्चोक्तं युक्तमित्यर्थः॥ १०॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां चतुर्थाध्यायस्य तृतीयः पादः॥ ४॥ ३॥**

---

१. 'स एनान् ब्रह्म गमयति' (छां.४–१५–६)

२. 'यदुपास्ते पुमान् जीवन्यत्प्राप्तुमभिवाञ्छति।
यच्च पश्यति तृप्तस्सन् तत्प्राप्नोति मृतेरनु' (पाद्मे)

३. '**स यथा कामो भवति तत्क्रतुर्भवति** यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभि-सम्पद्यते' (बृ.६–४–५)

४. '**अन्तःप्रकाशा** बहिःप्रकाशाः सर्वप्रकाशाः।
देवा वाव सर्वप्रकाशा ऋषयोऽन्तःप्रकाशाः मनुष्या एव बहिःप्रकाशा' (चतुर्वेदशिखा.)

# चतुर्थाध्यायस्य चतुर्थः पादः

॥ सम्पद्याधिकरणम् ॥ १ ॥

## १. ॐ सम्पद्याविहाय स्वेन शब्दात् ॐ

ज्ञानी **सम्पद्य** ब्रह्म प्राप्य । **अविहाय** ब्रह्मानतिक्रम्य । **स्वेन** आविर्भूतस्वरूपेणावस्थितः सन् भोगान् भुङ्क्ते । कुतः? **शब्दात्** 'स एवं वित्'[१] इति श्रुतेरित्यर्थः ॥ १ ॥

॥ मुक्ताधिकरणम् ॥ २ ॥

## २. ॐ मुक्तः प्रतिज्ञानात् ॐ

स तत्र पर्येतीति श्रुतौ **मुक्त** एवोच्यते । कुतः? **प्रतिज्ञानात्** मुक्तादन्यस्य दिव्यभोगं प्रतिषिध्य 'अहरहः'[२] इति श्रुतौ मुक्तस्यैव ब्रह्मप्राप्त्या दिव्यभोगोक्तेरित्यर्थः ॥ १ ॥

॥ आत्माधिकरणम् ॥ ३ ॥

## ३. ॐ आत्मा प्रकरणात् ॐ

परञ्ज्योतिःशब्देन **आत्मा** परमात्मैवोच्यते न सूर्यः । कुतः **प्रकरणात्** अस्य वाक्यस्य परमात्मप्रकरणत्वादित्यर्थः ॥ १ ॥

---

१. '**स य एवंविदेवं**मन्वान एवंपश्यन्नात्मानमभिसम्पद्यैतेनात्मना यथाकामं सर्वान् कामाननुभवति' (सौपर्णश्रुतिः)

२. '**अहरहरेनम**नुप्रविशत्युपसङ्क्रमे च न तत्र मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येष तदा भवत्यथ यदैनं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च कामांश्चैवानुभवति' (बृहच्छ्रुतिः)

॥ अविभागाधिकरणम् ॥ ४ ॥

## ४. ॐ अविभागेन दृष्टत्वात् ॐ

**अविभागेन** परमात्मभुक्तभोगान् । क्रमेणैव मुक्तैः भोगाः भुज्यन्ते । कुतः? **दृष्टत्वात्** 'यानेवाहम्'[१] इति श्रुतेरित्यर्थः ॥ १ ॥

॥ ब्राह्माधिकरणम् ॥ ५ ॥

## ५. ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ

**ब्राह्मेण** ब्रह्मसम्बन्धिदेहेनैव । मुक्तो भोगान् भुङ्क्ते । कुतः? **उपन्यासादिभ्यः** 'ब्रह्मणा'[२] इति श्रुतेः । आदिपदोक्तादत्त[३] इति स्मृतेर्युक्तेश्चेति **जैमिनि**राचार्यो मन्यत इत्यर्थः ॥ १ ॥

## ६. ॐ चितिमात्रेण तदात्मकत्वादित्यौडुलौमिः ॐ

**चितिमात्रेण** ज्ञानैकस्वरूपदेहेन । मुक्तो भोगान् भुङ्क्ते । कुतः? **तदात्मकत्वात्** । चिन्मात्रदेहस्यैव मुक्तस्वरूपत्वात् । तस्य च संसृत्यहेतुत्वादि**त्यौडुलोमि**राचार्यो मन्यत इत्यर्थः ॥ २ ॥

## ७. ॐ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॐ

**एवं** औडुलोम्युक्तप्रकारस्य । **उपन्यासात्** 'स वा एषः'[४] इति श्रुतावुक्तत्वात् । **पूर्वभावात्** पूर्वस्मिन् जैमिन्युक्तपक्षेऽपि भावात् प्रमाणसद्भावात् । **अविरोधं** पक्षद्वयस्याविरोधम् । **बादरायण**ाचार्यो मन्यत इत्यर्थः ॥ ३ ॥

---

१. '**यानेवाहं** शृणोमि यान् पश्यामि यान् जिघ्रामि तानेवैत इदं शरीरं विमुच्यानुभवन्ति' (चतुर्वेदशिखा.)

२. 'स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य **ब्रह्मणा** पश्यति **ब्रह्मणा** शृणोति ब्रह्मणैवेदं सर्वमनुभवति' (माध्यन्दिनायनश्रुतिः)

३. '**आदत्ते** हरिहस्तेन हरिदृष्टचैव पश्यति । गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत्'

४. '**स वा एष** एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्री भवत्यथ तेनैव रूपेणाभिपश्यत्यभिशृणोत्यभिमनुतेऽभिविजानाति तामाहुर्मुक्तिः' (माध्यन्दिनायनश्रुतिः)

॥ सङ्कल्पाधिकरणम् ॥ ६ ॥

## ८. ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ

चो विरुद्धपक्षव्यावृत्त्यर्थः । **सङ्कल्पादेव** स्वेच्छानुसारेणैव मुक्ता भोगान् भुञ्जते । कुतः? **तच्छ्रुतेः** तस्मिन्नर्थे 'स यदि'[१] इति श्रुतेरित्यर्थः ॥ १ ॥

॥ अनन्याधिपत्यधिकरणम् ॥ ७ ॥

## ९. ॐ अत एव चानन्याधिपतिः ॐ

चशब्दो विरुद्धशङ्काव्यावर्तकः । **अनन्याधिपतिः** मुक्तः स्वोत्तमस्वकीयान्याधिपतियुक्तो न । कुतः? **अत एव** सत्यसङ्कल्पत्वादेवेत्यर्थः ॥ १ ॥

॥ अभावाधिकरणम् ॥ ८ ॥

## १०. ॐ अभावं बादरिराह ह्येवम् ॐ

प्राकृतदेहाभावमङ्गीकृत्य चिन्मात्रदेहेन मुक्तस्य भोगोऽस्ति । **एवं बादरि**राचार्यो मन्यते । कुतः? **हि** यस्मात् । **अभावं** प्राकृतशरीराभावम् । 'अशरीरो वाव'[२] इति श्रुति**राह** । तस्मादित्यर्थः ॥ १ ॥

## ११. ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ

**जैमिनिः** मुक्तानां **भावं** चिन्मात्रातिरिक्तदेहसद्भावं मन्यते । कुतः? **विकल्पाम्नानात्** विकल्पस्योभयविधदेहस्याम्नानात् । 'चिता वाऽचिता वा'[३] इति श्रुत्या प्रतिपादनादित्यर्थः ॥ २ ॥

---

१. '**स यदि** पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' (छां.८-२-१)

२. '**अशरीरो वाव** तदा भवत्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतो याभ्यां ह्येष उन्मथ्यते' (कौण्ठरव्यश्रुतिः)

३. 'स वा एष एवं वित्परमभिपश्यत्यभिशृणोति ज्योतिषैव रूपेण **चिता वाऽचिता वा** नित्येन वाऽनित्येन वाऽथानन्दी ह्येवैष भवति नानानन्दं कश्चिदुपस्पृशति' (उद्दालकश्रुतिः)

## १२. ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ

**वादरायणः उभयविधं** प्राकृतदेहभावाभावाख्यम् । मतं स्वमतं मन्यते । कुतः? **अतः** प्रमाणसद्भावात् । कथमेतद्युज्यते । **द्वादशाहवत्** यथा द्वादशाहात्मकः क्रतुरहीनसत्रोभयात्मकः तथैवेत्यर्थः ॥ ३ ॥

## १३. ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ

**सन्ध्यवत्** यथा स्वप्नावस्थायां बाह्यदेहाभावेऽपि भोगसम्बन्धः तद्वन्मुक्तावपि । **तन्वभावे**ऽपि प्राकृतदेहाभावेऽपि । **उपपत्तेः** भोगस्य युक्तत्वात् देहाभावपक्षो युज्यत इत्यर्थः ॥ ४ ॥

## १४. ॐ भावे जाग्रद्वत् ॐ

**जाग्रद्वत्** यथा जाग्रदवस्थायाम् । देहसद्भावेऽपि भोगसम्भवः । तद्वन्मुक्तावपि । **भावे** प्राकृतदेहसद्भावेऽपि भोगो युज्यत इत्यर्थः ॥ ५ ॥

## १५. ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ

**प्रदीपवत्** यथा प्रदीपस्य दीपिकादिप्रवेशः तद्गततैलादिभोगः काष्ण्याद्यभोगश्च । **तद्वन्मुक्तानमावेशः** जडशरीरप्रवेशः । तत्र साधुभोगानुभवः दुःखाद्यननुभवश्चास्ति । कुतः? **हि** यस्मात् । 'तीर्णो हि'[१] इति श्रुतिः । **तथा दर्शयति** तथा प्रतिपादयति । तस्मादित्यर्थः ॥ ६ ॥

## १६. ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ

'स्वर्गे लोके'[२] इति वाक्यं **स्वाप्ययसम्पत्त्योरन्यतरापेक्षं** अन्यतरविषयः । कुतः? **हि** यस्मात् । अस्य च 'अत्र पिता ऽपिता'[३] इति श्रुत्या सुप्तिमुक्तिविषयत्वं **आविष्कृतं** प्रकटीकृतम् । तस्मादित्यर्थः ॥ ७ ॥

---

१. '**तीर्णो हि** तदा सर्वान् शोकान् हृदयस्य भवति' (बृ.६-३-२२)

२. '**स्वर्गे लोके** न भयं किञ्चनास्ति' (कठ.१-१२)

३. '**अत्र पिताऽपिता** भवति... अनन्वागतं पुण्येनानन्वागतं पापेन' (बृ.६-३-२२)

॥ जगद्व्यापाराधिकरणम् ॥ ९ ॥

## १७. ॐ जगद्व्यापारवर्जम् ॐ

मुक्तः जगत्सृष्ट्यादिव्यापारवर्जं यथा भवति तथा सर्वान् कामाना-प्नोतीत्यर्थः ॥ १ ॥

## १८. ॐ प्रकरणादसन्निहितत्वाच्च ॐ

**च**शब्दः साध्यसमुच्चये। 'सर्वान् कामान्'[१] इति श्रुतौ जीव उच्यते। कुतः? **प्रकरणात्** अस्य वाक्यस्य जीवप्रकरणत्वात्। तथाच न तत्रासङ्कोचेन जीवस्य सर्वकामभोग उपयुज्यते। किन्तु सङ्कोचेनैव। कुतः? **असन्निहितत्वात्** जीवानां जगद्व्यापारसामर्थ्यविदूरत्वादित्यर्थः ॥ २ ॥

## १९. ॐ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॐ

मुक्तानां जगदैश्वर्यमस्तीत्यङ्गीकार्यम्। कुतः? **प्रत्यक्षोपदेशात्** 'ता यो वेद'[२] इति श्रुत्या स्फुटं मुक्तस्याखिलदेवतापूज्यत्वस्य प्रतिपादनादिति **चेन्न**। कुतः? **आधिकारिकमण्डलस्थोक्तेः** अत्र वाक्ये मुक्तहिरण्यगर्भस्यैव मुक्त-स्वस्वाधिकारनियुक्तदेवतासमूहपूज्यत्वाभिधानादित्यर्थः ॥ ३ ॥

## २०. ॐ विकारावर्ति च तथाहि दर्शयति ॐ

**चो** नञोऽनुकर्षणार्थः। मुक्तानां **विकारावर्ति**। विकारं संसारमावर्तयतीति विकारावर्ति। संसारविषयकव्यापारो न। कुतः? 'इमम्'[३] इति श्रुतिः **तथा दर्शयति** प्रतिपादयति तस्मादित्यर्थः ॥ ४ ॥

---

१. '**सर्वान् कामाना**स्वाऽमृतः समभवत्' (ऐ.आ.२-५-४)

२. '**ता यो वेद,** स वेद ब्रह्म, सर्वेऽस्मै देवा बलिमावहन्ति' (तै.उ.१-५)

३. 'इमं मानवमावर्तं नावर्तन्ते' (छां.४-१५-६)

॥ स्थित्यधिकरणम् ॥ १० ॥

## २१. ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ

मुक्तस्य एकप्रकारेणैवावस्थितिः न तु वृद्धिह्रासौ स्तः । कुतः? यतः 'स एषः'[१] इत्यादिश्रुतिः **स्थितिमेकप्रकारेणैवावस्थानमाह** । न केवलमेतावत् किन्तु **प्रत्यक्षानुमाने** च ज्ञानिप्रत्यक्षकारणाभावलिङ्गे **चैवं** श्रुत्युक्तार्थम् । **दर्शयतः** ज्ञापयतः । अत इत्यर्थः ॥ १ ॥

## २२. ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ

अन्यत्राविशेषं विना **भोगमात्रस्य** विशेषे सत्यपि मुक्तस्य **साम्य**-शब्दितैकप्रकारोक्तिरूपलिङ्गात् न भोगविशेषः तद्वृद्ध्यादौ कारणमिति न मुक्तो वृद्ध्यादिमानित्यर्थः ॥ २ ॥

॥ अनावृत्त्यधिकरणम् ॥ ११ ॥

## २३. ॐ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॐ

मुक्तस्यानावृत्तिः पुनरावृत्तिर्नास्ति । कुतः? शब्दात् 'न च पुनरावर्तते'[२] इति श्रुतेरित्यर्थः । द्विरुक्तिरुक्तार्थस्यैवमेवेत्यावधारणार्था ॥ १ ॥

**मन्मानसाम्बुजस्थेन हरिणा चेक्षयाञ्जसा ।**
**भूतिदायकया कृष्णः प्रीयतां कमलालयः ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्याणां**
**श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण जगन्नाथयतिना कृतायां**
**ब्रह्मसूत्रदीपिकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

---

१. **'स एष** एतस्मिन् ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सर्वदा भवति दर्शन्नेव ब्रह्म दर्शन्नेवात्मानं तस्यैवं दर्शयतो नापत्तिर्न विपत्तिः' (जाबालश्रुतिः)

२. **'न च पुनरावर्तते** न च पुनरावर्तते' (छां.८–१५–१)

# परिशिष्टम्- १

## ॥ ब्रह्मसूत्रानुक्रमणिका ॥

# परिशिष्टम्- २

## श्रीविजयीन्द्रतीर्थकृतब्रह्मसूत्रन्यायसङ्ग्रहः

### चतुर्थोऽध्यायः

कर्मक्षयो देवलयान्योत्क्रान्ती गम्ययुक्सृतिः ।
भोगश्चोक्ता मोक्षभेदास्तुर्येऽङ्घ्रिषु जनिक्रमात् ॥ १ ॥

मोक्षान्तरङ्गताज्ञप्त्या आदावत्र निगद्यते ।
आवश्यकं नित्यमपि यत्कार्यं ज्ञानसाधनम् ॥ २ ॥

प्रायिकत्वात् प्रधानत्वान्मोक्षाध्यायादिताऽनयोः ।
श्रुत्याद्यावर्त्यमभ्यासात् स्वामित्वोपासनं सदा ॥ ३ ॥

न ब्रह्मतान्यदेवेषु ध्येयोत्कर्षाच्च सात्मनि ।
स्वोत्पादकाङ्गता देवैरासीनेनैव सम्भवात् ॥ ४ ॥

आमुक्त्यावश्यकं ध्यानमारब्धान्यक्षयाद्यतः ।
चतुर्थाद्ये नया अष्टौ तद्वितीये तु ते दश ॥ ५ ॥

दृष्ट्यादेर्वाङ्मनोलीना मनः प्राणे तदुत्तरात् ।
प्राणः परस्मिन् श्रुत्यादेर्भूतेष्वन्ये श्रुतेस्सुराः ॥ ६ ॥

नाग्रावेव श्रुतेः सर्वे न मुक्तत्वाच्छ्रियो लयः ।
प्राणद्वारेशलीनास्ते सत्येच्छाश्चेशयान्त्रिताः ॥ ७ ॥

ज्ञान्युत्क्रान्तिर्नाज्ञवत्स्याद् भावि(भाव्ये)विद्यागतिस्मृती ।
मार्गोऽर्चिरादिरेवैकोऽर्चिषा वायुमहस्ततः ॥ ८ ॥

तटितो वरुणः पश्चात् प्राक्प्राणो ह्यातिवाहिकः ।
मुख्यवायुर्नयेद् ब्रह्माऽप्रतीकालम्बना(त्परं)न्पुरा ॥ ९ ॥

नयास्तुर्यतृतीये षडेकादश तदुत्तरे ।
मुक्तो भुङ्क्तेऽविहायेशं जक्षन्नान्यो ह्यसम्भवात् ॥ १० ॥

ज्योतिः प्रकरणाच्चेशः सुखभुक्तैकभुक्सयुक् ।
सयुजो ब्रह्मनिर्देह सङ्कल्पादेव भोगिनः ॥ ११ ॥

नोत्तमान्याधिपतयो मुक्ताः स्वेच्छात्तविग्रहाः ।
न जगद्व्यापृतिजुषो न वृद्धिह्रासभागिनः ॥ १२ ॥

नावर्तन्ते विमुक्तास्ते सत्यसङ्कल्पतादितः ।
चतुरध्यायगा न्याया धीगाः मेशाबुधामगाः ॥ १३ ॥

अर्कार्द्रीन्द्रारिरुद्रार्कधीयोति जगती नखाः ।
नखरम्भेशाष्टदशारीशास्सर्वाङ्घ्रिगा नयाः ॥ १४ ॥

योगीरागगवीधीराजालमेघागमागिरः ।
धीरारवाजितपणाधियो रुद्रास्तयोगिरः ॥ १५ ॥

शम्बयोधीमयोध्यायसूत्राणां नाधियोनदाः ।
श्रीरुद्रा ब्रह्ममीमांसान्यायाः सूत्राणि भूषणम् ॥ १६ ॥

श्रीमदानन्दतीर्थेड्यश्रीशप्रीत्त्या अकार्ययम् ।
विजयीन्द्रेण यतिना सूत्राणां न्यायसङ्ग्रहः ॥ १७ ॥

॥ इति श्रीद्विजयीन्द्रयतिविरचिते ब्रह्मसूत्रन्यायसङ्ग्रहे चतुर्थोऽध्यायः ॥

# परिशिष्टम्- ३

## श्रीधीरेन्द्रयतिविरचितः विषयवाक्यसङ्ग्रहः

### अथ चतुर्थोऽध्याये प्रथमः पादः

श्रोतव्य इत्यादिवाक्यमावृत्तेरसकृन्नये ।
आत्मानमेवेति वचः आत्मेतित्विति सन्नये ॥ १ ॥
न प्रतीके नहीत्यत्र नाम ब्रह्मेति च स्मृतम् ।
ब्रह्मदृष्टिनये ब्रह्म पूर्णमित्यादिकं वचः ॥ २ ॥
चक्षोः सूर्योऽजायतेति ह्यादित्यादिमते नये ।
उपविश्याऽसनेत्याद्यमासीनः सम्भवादिति ॥ ३ ॥
सर्वदैनमुपासीतेत्यादि प्राणनयेऽपि हि ॥
विद्वानतिमृत्युमेतीत्याद्यं कर्मक्षये नये ॥ ४ ॥

॥ इति चतुर्थाध्यायस्य प्रथमः पादः ॥

### अथ चतुर्थोऽध्याये द्वितीयः पादः

वाङ्मनसि दर्शनादित्यत्र वाङ्मनसीति वाक् ।
तन्मनः प्राण इत्यत्र मनः प्राणेति वाङ्मतम् ॥ १ ॥
प्राणः परमन्वित्येतत् सोऽध्यक्षे तदितीर्यते ।
भूतेष्वित्यत्र वागग्नौ सर्वे देवा इतीरितम् ॥ २ ॥
सर्वे देवा इति वचो नैकस्मिन्निति सन्नये ।
महतोऽव्ययमित्याद्यं समनेत्यादिके नये ॥ ३ ॥
अविभागनये सत्यकाम इत्यादिकं मतम् ।
शतं चैकाचेति वाक्यं तदोकोग्रादिके नये ॥ ४ ॥
योगिनः प्रतिस्मर्येतेत्याद्येऽसौ विषयस्त्विति ।

॥ इति चतुर्थाध्यायस्य द्वितीयः पादः ॥

## अथ चतुर्थोऽध्याये तृतीयः पादः

अर्चिरादिनये चैव तेऽर्चिषन्त्विति वाग् भवेत् ।
वायुशब्दादिति नये स वायुमिति निश्चयः ॥ १ ॥
तडितोऽधीत्यधिकृतेर्वत्सरात् तडितं त्विति ।
द्वितीयां गतिं वायुमित्याद्यातिवाहिकलैङ्गिके ॥ २ ॥
कार्यं बादरीरीत्यत्र स एनानिति चोदितम् ॥

॥ इति चतुर्थाध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थोऽध्याये चतुर्थः पादः

सम्पद्येत्यत्र चात्मानमभिसम्पद्यतेत्यदः ।
स तत्र पर्येतीत्येतन्मुक्तमित्यादिके नये ॥ १ ॥
परञ्ज्योतिरुपेत्यैतदात्मप्रकाणादिके नये ।
अविभागेनेति नये सर्वान् कामानितीरितम् ॥ २ ॥
ब्राह्मेण जैमिनिनये तानेवैतद्वदन्त्विति ।
सङ्कल्पादेव चेत्यत्राथसदैवमितीरितम् ॥ ३ ॥
अत एव चानन्यनये विमुक्तश्चेति मुक्तिवाक् ।
अभावं बादरीरिति नये कामानितीरितम् ॥ ४ ॥
सर्वान् कामानवाप्नोति जगद्व्यापारवर्जने ।
स्थितिमाहेत्यत्रचैतत्साम गायन्नितीरितम् ॥ ५ ॥
अनावृत्तिनये पूर्वं विमुक्तिप्रतिपादकम् ।
टीकादौ विषयोक्तानि अन्विष्टानि यथामति ॥ ६ ॥

॥ इति श्रीधीरेन्द्रयतिकृते विषयवाक्यसङ्ग्रहे चतुर्थाध्यायस्य चतुर्थः पादः ॥

# परिशिष्टम्- ४

## श्री सुधीन्द्रतीर्थविरचिता श्रीमद्ब्रह्मसूत्राधिकरणरत्नमाला

॥ अथ चतुर्थोऽध्यायः ॥

उक्त्वाऽथब्रह्मजिज्ञासापदार्थान् लक्षणैस्त्रिभिः ।
तुर्येऽतः पदबोध्यस्य मोक्षस्याऽह स्वरूपकम् ॥
कर्मक्षयोत्क्रान्तिमार्गभोगरुपस्य लक्षणे ।
कर्मक्षयं तु प्रथमे प्राधान्येन न्यरूरुपत् ।
प्राथम्याद् भगवान्पादेऽत्यवश्यंभावि साधनम् ॥
न्यरूरूपत् सप्तनय्यां श्रुत्याद्यावृत्तिकार्यताम् ॥ आदावाह नये ॥ १ ॥

तत्राऽत्मत्वोपास्तेर्द्वितीयके ॥ नित्यशः कार्यतामाह ॥ २ ॥

तृतीये तु न्यवारयत् । विष्णुप्रतीकयोरैक्योपास्तिम् ॥ ३ ॥

तुर्ये नयेऽब्रवीत् आवश्यकत्वं ब्रह्मत्वोपास्तेः ॥ ४ ॥

पञ्चम आह सः । स्वास्वाश्रयाङ्गकत्वेन श्रीशोपास्तेः सुकार्यताम् ॥ ५ ॥

सुरैः षष्ठे तु नियममासनादेरुपासने ॥ ६ ॥

ध्यानस्य प्रायणान्तत्वं सप्तमेऽसाधयन्नये ॥ ७ ॥

प्रासङ्गिकं समाप्यैवमीश्वराधिगमाद् ध्रुवम् ॥
कर्मक्षयाभिधफलसिद्धिरित्यष्टमेऽवदत् ॥ ८ ॥

**तुरीयस्याऽद्यचरणे नयाः अष्टौ समीरिताः ।**
**॥ इति चतुर्थाध्यायस्य प्रथमः पादः ॥**

देवानां स्वोच्चदेवेषु लयमुत्क्रान्तिमाह च ॥
तुरीयस्य द्वितीयाङ्घ्रौ वाचो मनसि संलयम् । आदावाह नये ॥ १ ॥

प्राणे लयं तस्य द्वितीयके ॥ २ ॥

वाणीपतेर्लयं त्वीशे नये प्राह तृतीयके ॥ ३ ॥
लयं मुक्तान्यदेवानां पञ्चभूताभिमानिषु ॥ चतुर्थे तु ॥ ४ ॥
नये प्राह सर्वभूतेषु पञ्चमे ॥ ५ ॥
समर्थितः सुराणां तु लयः षष्ठे श्रियो हरौ ।
लयाभावः सूत्रकृता परमात्मनि संलयम् ।
विरिञ्चेतरदेवानां सप्तमे हरिरब्रवीत् ॥ ७ ॥
मुक्तानां हर्यधीनत्वं नये त्ववददष्टमे ॥ ८ ॥
देवानां लयमुक्त्वैवं मनुष्यज्ञानिनामथ ।
विलक्षणोत्क्रान्तिमन्योत्क्रान्तितो नवमेऽवदत् ॥ ९ ॥
आवश्यकत्वमन्ते तु विद्याया गत्यनुस्मृतेः ॥ १० ॥
**प्राह द्वितीये चरणे तुरीयस्य नया दश ॥**

**॥ इति चतुर्थाध्यायस्य द्वितीयः पादः ॥**

**३. मार्ग - गम्यपादः ।**

उत्क्रान्तानां तु यः पन्थाः प्राप्तौ तेन पथा हरेः ।
गतानाममराणां च यद्गम्यं तद् द्वयं प्रभुः ।
तुरीयस्य तृतीयेऽङ्घ्रौ सूत्रकृत् सन्यरूरुपत् ॥
तत्र विष्णुप्राप्तिमार्गे आदावर्चिष आदिताम् । नये वायो ॥ १ ॥
द्वितीये तु तदानन्तर्यमाह हि ॥ २ ॥
तृतीये प्राप्यतामाह तडितो वत्सरात् परम् ॥ ३ ॥
आतिवाहिकतामाह तुर्ये त्वर्चिरनन्तरम् ॥ ४ ॥
प्राप्य वायोर्मुख्यवायोरन्तिमत्वं तु पञ्चमे ॥
नये ब्रह्मप्राप्तिमार्गे सूत्रकृत् समसीषधत् ॥ ५ ॥
एवं मार्गं संविचार्य पञ्चनय्या (:) श्रुतीश्वरः ॥
कृष्णो गम्यस्वरूपं तु नये षष्ठे न्यरूरुपत् ॥ ६ ॥
**तुरीयस्य तृतीयेऽङ्घ्रौ नयाः षडिति कीर्तिताः ।**

**॥ इति चतुर्थाध्यायस्य तृतीयः पादः ॥**

## ४ भोगपादः

चतुर्थस्य चतुर्थेऽङ्घ्रौ चतुर्वक्त्रेण केशवम् ॥
गतानां सह यो भोगस्तं व्यासः सन्न्यरूरुपत् ॥
ब्रह्मानतिक्रमेणैव मुक्तानां प्रथमे नये । भोगानुभवमाहेशो ॥ १ ॥

ब्रह्म प्राप्याऽविहाय तत् ।
भुञ्जानस्याखिलान् द्वितीये त्वाह मुक्तताम् ॥ २ ॥

ज्योतिषो मुक्तगम्यत्वं ब्रह्मत्वं तु तृतीयके ॥ ३ ॥

सायुज्यभाजां तुर्ये तु श्रीशसम्भुक्तभोक्तृताम् ॥ ४ ॥

निरस्य देहविरहप्रयुक्तां सङ्कल्पमात्रसाध्यभोगित्वमब्रवीत् ॥ षष्ठेऽ ॥ ६ ॥

धमनियम्यत्वराहित्यं सप्तमेऽवदत् ॥ ७ ॥

निराह मुक्तसम्भोगानुपपत्तिं नयेऽष्टमे ॥ ८ ॥

भोगेयत्तां तु मुक्तस्य नवमे प्राह सूत्रकृत् ॥ ९ ॥

वृद्धिर्ह्रासश्च नेत्याह भोगादेर्मुक्तसन्ततेः ॥
दशमे पुनरावृत्तिं मुक्तानामन्तिमे नये ॥
अवदद् भगवान् व्यासः श्रीशसञ्ज्ञानसिद्धये ॥ १० ॥

तद्वाक्यपद्मसौरम्यं व्यञ्जयन्मध्वमारुतः ।
तापानपाहरत् स्वानां कृपापूरः सुशीतलः ॥
तुर्याध्यायतुरीयाङ्घ्रौ नया एकादशेरिताः ॥
एवं षोडश पादेषु मेलने खरशः नयाः ॥ (२२२)

॥ इति चतुर्थाध्यायस्य चतुर्थः पादः ॥

॥ इति श्रीमद्ब्रह्मसूत्राधिकरणरत्नमालायां श्रीसुधीन्द्रयति विरचितायां चतुर्थोऽध्यायः समाप्तः ॥

श्रीशः शरणम् ॥ श्रीकृष्णार्पणमस्तु ॥ श्रीमध्वेशार्पणमस्तु ॥

# परिशिष्टम्- ५

## एतद्ग्रन्थोदाहृतप्रमाणवचनानां वर्णानुक्रमसूचिका

| प्रमाणम् | पृ.सं. |
|---|---|
| 'ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम् ।' | १२ |
| 'आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता ।' ब्रह्मतर्के | १३ |
| 'चक्षोः सूर्यो अजायत' (ऋ.१०.९०.१३) | १३ |
| 'आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु ।' नारायणतन्त्रे | १५ |
| 'स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु ।' | १५ |
| 'स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा ।' | १७ |
| नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः । इति नारायणतन्त्रे | १७ |
| 'अचलं चेच्छरीरं स्यान्मनसश्चाप्यचालनम् ।' इति ब्रह्माण्डे | १९ |
| 'समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।' (भ.गी. ६.१३) | १९ |
| 'पर्वताग्रे नदीतीरे ....' इति स्मृतेः | २० |
| 'ब्राह्मे मुहूर्ते उत्थाय वार्युपस्पृश्य माधवः ।' (भाग. १०.७८.४) | २० |
| 'ब्राह्मे मुहूर्ते चोत्थाय धर्मार्थानुपचिन्तयेत् ।' मनुस्मृतिः | २० |
| 'तमेव देशं सेवेत तं कालं तामवस्थितिम् ।' इति वाराहे | २१ |
| 'स यो ह वै तद् भगवन् मनुष्येषु' (प्र.५-१) | २२ |
| 'सर्वदैनमुपासीत यावद् विमुक्तिर्मुक्ता' इति सौपर्णश्रुतिः | २३ |
| 'शृणुयाद् यावदज्ञानं मतिर्यावद्युक्तता ।' इति ब्रह्माण्डे | २३ |
| 'यद्यथा पुष्करपलाश आपो न श्लिष्यन्ते' (छा.४.१४.३) | २५ |
| 'तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयते' (छा.५-२४.३) | २५ |
| 'ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते ।' (ब्र.सू.अनु.३.४.श्लो.८) | २६ |
| 'यथाऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः ।' इति चाग्नेये | २७ |
| 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते' (छा. ६-१४-२) | २८ |
| 'यदानारब्धपापं स्यात् तद् विनश्यति निश्चयात् । | २९ |
| 'तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित् ।' इति नारायणतन्त्रे | २९ |
| 'स एनमविदितो न भुनक्ति' (बृ.३-४-१५) | ३१ |

| प्रमाणम् | पृ.सं. |
|---|---|
| 'तस्य पुत्रा दायमुपयन्ति' (शाट्यायन) | ३१ |
| 'अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति।' इति पाद्मे | ३३ |
| 'यदेव विद्यया करोति ' (छा.१-१-१०) | ३३ |
| 'न हास्य कर्म क्षीयते' (बृ.३-४-१५) | ३३ |
| अल्पमात्रःकृतो धर्मो भवेत् ज्ञानवतो महान्। इति च भारते | ३३ |
| 'आरब्धपुण्यपापस्य भोगेन क्षपणादनु।' इति नारायणतन्त्रे | ३६ |
| 'तस्य यावन्न वाङ्मनसि सम्पद्यते' (छा.६-१५-१) | ३७ |
| 'उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः।' इति स्कान्दे | ३८ |
| 'अग्नौ सर्वे देवा विलीयन्ते' इति हि गौपवनश्रुतेः | ३९ |
| 'मनः प्राणे' (छा. ६-१५-१) | ३९ |
| 'वायोर्वा व रुद्र उदेति' इति च कौण्डिन्यश्रुतिः | ३९ |
| 'सर्वे प्राणमुपगच्छन्ति' (श्रुतिः) | ४० |
| 'प्राणः परस्यां देवतायाम्' (श्रुतिः) | ४० |
| 'मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते।' (श्रुतिः) | ४१ |
| 'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम्' (श्रुतिः) | ४२ |
| 'प्राणः परस्याम्' (श्रुतिः) | ४३ |
| 'प्राणस्तेजसि' (छा. ६-१५-१) | ४३ |
| 'विलीनो हि प्रकृतौ संसारमेति' (सौपर्णश्रुतिः) | ४३ |
| 'भूतेषु देवा विलीयन्ते' इति बृहच्छ्रुतेः | ४३ |
| 'पृथिव्यामृभवो विलीयन्ते' (श्रुतिः) | ४४ |
| 'मृत्यवः पृथिव्यां' इति महोपनिषच्चतुर्वेदशिखा | ४५ |
| 'अग्नौ देवा विलीयन्ते' (श्रुतिः) | ४५ |
| 'तेजः परस्यां देवतायाम्' (छा.६-१५-१) | ४८ |
| 'द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च' बृहच्छ्रुतिः | ४८ |

| प्रमाणम् | पृ.सं. |
|---|---|
| 'प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम्।' इति गारुडे | ८९ |
| 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति' (बृ. ६-४-५) | ८९ |
| 'ईयुस्त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान्।' (भा.ता. २.२.२४) | ९० |
| 'अन्तःप्रकाशा बहिःप्रकाशाः सर्वप्रकाशाः।' इति चतुर्वेदशिखा | ९१ |
| 'स य एवंविदेवं मन्वानढ्य' इति सौपर्णश्रुतिः | ९२ |
| 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. ८-३-४) | ९२ |
| 'एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति' (छा.८-४-२) | ९२ |
| 'इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्यैतेनैव' इति मौद्गल्यश्रुतिः | ९२ |
| 'अहरहरेनमनुप्रविशत्युपसङ्क्रमे' इति बृहच्छ्रुतौ | ९४ |
| 'परञ्ज्योतिरुपसम्पद्य' (छां.८-३-४) | ९५ |
| 'स तेजसि सूर्ये सम्पन्नः' (प्रश्नः ५-५) | ८५ |
| 'परञ्ज्योतिः परम्ब्रह्म परमात्मादिका गिरः।' इति च ब्रह्माण्डे | ९६ |
| 'ह्वयाम्यग्निम्' (ऋ.१.३५.१) | ९६ |
| 'यानेवाहं शृणोमि यान् पश्यामि यान्' इति चतुर्वेदशिखा | ९६ |
| 'मुक्ताः प्राप्य परं विष्णुं तद्भोगान् लेशतः क्वचित्।' भविष्यत्पुराणे | ९७ |
| 'स वा एष ब्रह्मनिष्ठ इदं शरीरं' इति माध्यन्दिनायनश्रुतिः | ९९ |
| 'आदत्ते हरिहस्तेन हरिदृष्टचैव पश्यति।' इति स्मृतिः | ९९ |
| 'गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम्।'इति बृहत्तन्त्रे | ९९ |
| 'सर्वं वा एतदचित् परित्यज्य चिन्मात्र एवैष भवति' इत्युद्दालकश्रुतिः | १०० |
| 'स वा एष एतस्मान्मर्त्याद्' इति सौपर्णश्रुतिः | १०१ |
| 'मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः।' नारायणाध्यात्मे | १०२ |
| 'स यदि पितृलोककामो भवति' (छा ८-२-१) | १०३ |
| 'परमोऽधिपतिस्तेषां विष्णुरेव न संशयः।' इति वाराहे | १०५ |
| 'अशरीरो वाव तदा भवत्यशरीरं वाव सन्तम्' इत्येवं कौण्ठरव्यश्रुतिः | १०६ |

# परिशिष्टम्- ६

## अद्वैत-विशिष्टाद्वैत-द्वैतदर्शनानुसारेणाधिकरणसूत्रसङ्ख्यासूचिका

| अद्वैतमतरीत्या | विशिष्टाद्वैतमतरीत्या | द्वैतमतरीत्या |
|---|---|---|
| **अथ चतुर्थाध्यायस्य प्रथमः पादः** | **अथ चतुर्थाध्यायस्य प्रथमः पादः** | **अथ चतुर्थाध्यायस्य प्रथमः पादः** |
| **आवृत्त्यधिकरणम्** | **आवृत्त्यधिकरणम्** | **आवृत्त्यधिकरणम्** |
| ४७८. आवृत्तिरसकृदुपदेशात् | ४७०. आवृत्तिरसकृदुपदेशात् | ४८५. आवृत्तिरसकृदुपदेशात् |
| ४७९. लिङ्गाच्च | ४७१. लिङ्गाच्च | ४८६. लिङ्गाच्च |
| **आत्मत्वोपासनाधिकरणम्** | **आत्मत्वोपासनाधिकरणम्** | **आत्माधिकरणम्** |
| ४८०. आत्मेति तूपगच्छन्ति, ग्राहयन्ति च | ४७२. आत्मेति तूपगच्छन्ति ग्राहयन्ति च | ४८७. आत्मेति तूपगच्छन्ति, ग्राहयन्ति च |
| **प्रतीकाधिकरणम्** | **प्रतीकाधिकरणम्** | **न प्रतीकाधिकरणम्** |
| ४८१. न प्रतीके न हि सः | ४७३. न प्रतीके न हि सः | ४८८. न प्रतीके न हि सः |
| **ब्रह्मदृष्ट्यधिकरणम्** | ४७४. ब्रह्मदृष्टिरुत्कर्षात् | **ब्रह्माधिकरणम्** |
| ४८२. ब्रह्मदृष्टिरुत्कर्षात् | | ४८९. ब्रह्मदृष्टिरुत्कर्षात् |
| | **आदित्यादिमत्यधिकरणम्** | **आदित्याधिकरणम्** |
| | ४७५. आदित्यादिमतयश्चाङ्ग उपपत्तेः | ४९०. आदित्यादिमतयश्चाङ्ग उपपत्तेः |

**आदित्यादिमत्यधिकरणम्**

४८३. आदित्यादिमतयश्चाङ्ग उपपत्तेः

**आसीनाधिकरणम्**

४८४. आसीनः सम्भवात्

४८५. ध्यानाच्च

४८६. अचलत्वं चापेक्ष्य

४८७. स्मरन्ति च

**एकाग्रताधिकरमणम्**

४८८. यत्रैकाग्रता तत्राविशेषात्

**आप्रायणाधिकरणम्**

४८९. आप्रायणात्तत्रापि हि दृष्टम्

**तदधिगमाधिकरणम्**

४९०. तदधिगम उत्तरपूर्वाघयोरश्लेष-विनाशौ तद्व्यपदेशात्

**इतरासंश्लेपाधिकरणम्**

४९१. इतरस्याप्येवमसंश्लेषः पाते तु

**आसीनाधिकरणम्**

४७६. आसीनः सम्भवात्

४७७. ध्यानाच्च

४७८. अचलत्वं चापेक्ष्य

४७९. स्मरन्ति च

४८०. यत्रैकाग्रता तत्राविशेषात्

**आप्रयणाधिकरणम्**

४८१. आप्रयणात्तत्रापि हि दृष्टम्

**तदधिगमाधिकरणम्**

४८२. तदधिगम उत्तरपूर्वाघयोरश्लेष-विनाशौ तद्व्यपदेशात्

**इतराधिकरणम्**

४८३. इतरस्याप्येवमसंश्लेषः पाते तु

**अनारब्धकार्याधिकरणम्**

४८४. अनारब्धकार्ये एव तु पूर्वे तदवधेः

**आसीनाधिकरणम्**

४९१. आसीनः सम्भवात्

४९२. ध्यानाच्च

४९३. अचलत्वं चापेक्ष्य

४९४. स्मरन्ति च

४९५. यत्रैकाग्रता तत्राविशेषात्

**आप्रायणाधिकरणम्**

४९६. आ प्रायणात् तत्रापि हि दृष्टम्

**तदधिगमाधिकरणम्**

४९७. तदधिगम उत्तरपूर्वाघयोरश्लेष-विनाशौ तद्व्यपदेशात्

४९८. इतरस्याप्येवमसंश्लेषः पाते तु

४९९. अनारब्धकार्ये एव तु पूर्वे तदवधेः

५००. अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्

**अनारब्धाधिकरणम्**

४९२. अनारब्धकार्ये एव तु पूर्वे तदवधेः

**अग्निहोत्राद्यधिकरणम्**

४९३. अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्

४९४. अतोऽन्याऽपि ह्येकेषामुभयोः

**विद्याधिकरणम्**

४९५. यदेव विद्ययेति हि

**इतरक्षपणाधिकरणम्**

४९६. भोगेन त्वितरे क्षपयित्वा सम्पद्यते

**इति चतुर्थाध्यायस्य प्रथमः पादः**

अत्र पादे आदितः

अधिकरणानि १४ १६८

सूत्राणि १९ ४९६

**अग्निहोत्राद्यधिकरणम्**

४८५. अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ।

४८६. अतोऽन्यापि ह्येकेषामुभयोः

४८७. यदेव विद्ययेति हि

**इतरक्षपणाधिकरणम्**

४८८. भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते

**इति चतुर्थाध्यायस्य प्रथमः पादः**

अत्र पादे आदितः

अधिकरणानि ११ १३४

सूत्राणि १९ ४८८

५०१. अतोऽन्यदपीत्येकेषामुभयोः

५०२. यदेव विद्ययेति हि

५०३. भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते

**इति चतुर्थाध्यायस्य प्रथमः पादः**

अत्र पादे आदितः

अधिकरणानि ८ १९६

सूत्राणि १९ ५०३

**अथ चतुर्थाध्यायस्य द्वितीयः पादः**

**वागधिकरणम्**

४९७. वाङ्मनसि दर्शनाच्छब्दाच्च

४९८. अत एव च सर्वाण्यनु

**मनोऽधिकरणम्**

४९९. तन्मनः प्राण उत्तरात्

**अध्यक्षाधिकरणम्**

५००. सोऽध्यक्षे तदुपगमादिभ्यः

५०१. भूतेषु तच्छ्रुतेः

५०२. नैकस्मिन् दर्शयतो हि

**आसृत्युपक्रमाधिकरणम्**

५०३. समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य

**संसारव्यवपेशाधिकरणम्**

५०४. तदाऽपीतेः संसारव्यपदेशात्

५०५. सूक्ष्मं प्रमाणतश्च तथोपलब्धेः

**अथ चतुर्थाध्यायस्य द्वितीयः पादः**

**वागधिकरणम्**

४८९. वाङ्मनसि दर्शनाच्छब्दाच्च

४९०. अत एव च सर्वाण्यनु

**मनोऽधिकरणम्**

४९१. तन्मनः प्राण उत्तरात्

**अध्यक्षाधिकरणम्**

४९२. सोऽध्यक्षे तदुपगमादिभ्यः

**भूताधिकरणम्**

४९३. भूतेषु तच्छ्रुतेः

४९४. नैकस्मिन् दर्शयतो हि

**आसृत्युपक्रमाधिकरणम्**

४९५. समाना चाऽसृत्युपक्रमादमृतत्वं चानुपोष्य

४९६. तदाऽपीतेः संसारव्यपदेशात्

४९७. सूक्ष्मं प्रमाणतश्च तथोपलब्धेः

**अथ चतुर्थाध्यायस्य द्वितीयः पादः**

**वाङ्मनसाधिकरणम्**

५०४. वाङ्मनसि दर्शनाच्छब्दाच्च

५०५. अत एव च सर्वाण्यनु

**मनःप्राणाधिकरणम्**

५०६. तन्मनः प्राण उत्तरात्

**अध्यक्षाधिकरणम्**

५०७. सोऽध्यक्षे तदुपगमादिभ्यः

**भूताधिकरणम्**

५०८. भूतेषु तच्छ्रुतेः

**नैकस्मिन्नधिकरणम्**

५०९. नैकस्मिन् दर्शयतो हि

**समनाधिकरणम्**

५१०. समना चासृत्युपक्रमादमृतत्वं चानुपोष्य

५११. तदपीतेः संसारव्यपदेशात्

५०६. नोपमर्देनातः
५०७. अस्यैव चोपपत्तेरेष ऊष्मा

**प्रतिषेधाधिकरणम्**

५०८. प्रतिषेधादिति चेन्न शरीरात्
५०९. स्पष्टो ह्येकेषाम्
५१०. स्मर्यते च

**कलाप्रलयाधिकरणम्**

५११. तानि परे तथा ह्याह

**अविभागाधिकरणम्**

५१२. अविभागो वचनात्

**तदोकोऽधिकरणम्**

५१३. तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया

**रश्म्यधिकरणम्**

५१४. रश्म्यनुसारी

४९८. नोपमर्देनातः
४९९. अस्यैव चोपपत्ते ऊष्मा
५००. प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम्
५०१. स्मर्यते च

**परसम्पत्त्यधिकरणम्**

५०२. तानि परे तथा ह्याह

**अविभागाधिकरणम्**

५०३. अविभागो वचनात्

**तदोकोऽधिकरणम्**

५०४. तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया

**रश्म्यनुसाराधिकरणम्**

५०५. रश्म्यनुसारी

५१२. सूक्ष्मं प्रमाणतश्च तथोपलब्धेः
५१३. नोपमर्देनातः
५१४. अस्यैव चोपपत्तेरूष्मा
५१५. प्रतिषेधादिति चेन्न शारीरात्
५१६. स्पष्टो ह्येकेषाम्
५१७. स्मर्यते च

**पराधिकरणम्**

५१८. तानि परे तथा ह्याह

**अविभागाधिकरणम्**

५१९. अविभागो वचनात्

**तदोकोऽधिकरणम्**

५२०. तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया

५२१. रश्म्यनुसारी
५२२. निशि नेति चेन्न सम्बन्धात्

५१५. निशि नेति चेन्न सम्बन्धस्य
यावद्देहभावित्वात्, दर्शयति च
दक्षिणायनाधिकरणम्
५१६. अतश्चायनेऽपि दक्षिणे
५१७.योगिनः प्रति च स्मर्यते स्मार्ते चैते
इति चतुर्थाध्यायस्य द्वितीयः पादः
अत्र पादे आदितः
अधिकरणानि ११ १७९
सूत्राणि २१ ५१७

अथ चतुर्थाध्यायस्य तृतीयः पादः
अर्चिराद्यधिकरणम्
५१८.अर्चिरादिना तत्प्रथितेः
वाय्वधिकरणम्
५१९. वायुशब्दादविशेषविशेषाभ्याम्
तडिदधिकरणम्
५२०. तडितोऽधि वरुणः सम्बन्धात्

निशाधिकरणम्
५०६. निशि नेति चेन्न सम्बन्धस्य
यावद्देहभावित्वात् दर्शयति च
दक्षिणायनाधिकरणम्
५०७. अतश्चायनेऽपि दक्षिणे
५०८.योगिनः प्रति च स्मर्यते स्मार्ते चैते
इति चतुर्थाध्यायस्य द्वितीयः पादः
अत्र पादे आदितः
अधिकरणानि ११ १४५
सूत्राणि २० ५०८
अथ चतुर्थाध्यायस्य तृतीयः पादः
अर्चिराद्यधिकरणम्
५०९. अर्चिरादिना तत्प्रथितेः
वाय्वधिकरणम्
५१०. वायुशब्दादविशेषविशेषाभ्याम्
वरुणाधिकरणम्
५११. तडितोऽधिवरुणः सम्बन्धात्

५२३.यावद्देहभावित्वाद् दर्शयति च
५२४. अतश्चायनेऽपि हि दक्षिणे
योग्यधिकरणम्
५२५. योगिनः प्रति स्मर्यते स्मार्ते चैते
इति चतुर्थाध्यायस्य द्वितीयः पादः
अत्र पादे आदितः
अधिकरणानि १० २०६
सूत्राणि २२ ५२५

अथ चतुर्थाध्यायस्य तृतीयः पादः
अर्चिराद्यधिकरणम्
५२६.अर्चिरादिना तत्प्रथितेः
वायुशब्दाधिकरणम्
५२७. वायुशब्दादविशेषविशेषाभ्याम्
तडिदधिकरणम्
५२८. तडितोऽधि वरुणः सम्बन्धात्

**आतिवाहिकाधिकरणम्**

५२१. आतिवाहिकास्तल्लिङ्गात्

५२२. उभयव्यामोहात् तत्सिद्धेः

५२३. वैद्युतेनैव ततस्तच्छ्रुतेः

**कार्याधिकरणम्**

५२४. कार्यं वादरिरस्य गत्युपपत्तेः

५२५. विशेषितत्वाच्च

५२६. सामीप्यात्तु तद्व्यपदेशः

५२७. कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्

५२८. स्मृतेश्च

५२९. परं जैमिनिर्मुख्यत्वात्

५३०. दर्शनाच्च

५३१. न च कार्ये प्रतिपत्त्यभिसन्धिः

**अप्रतीकालम्वनाधिकरणम्**

५३२. अप्रतीकालम्वनान्नयतीति वादरायण उभयथाऽदोषात्; तत्क्रतुश्च

**आतिवाहिकाधिकरणम्**

५१२. आतिवाहिकास्तल्लिङ्गात्

५१३. वैद्युतेनैव ततस्तच्छ्रुतेः

**कार्याधिकरणम्**

५१४.कार्यं वादरिरस्य गत्युपपत्तेः

५१५. विशेषितत्वाच्च

५१६. सामीप्यात्तु तद्व्यपदेशः

५१७. कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्

५१८. स्मृतेश्च

५१९. परं जैमिनिर्मुख्यत्वात्

५२०. दर्शनाच्च

५२१. न च कार्ये प्रत्यभिसन्धिः

५२२. अप्रतीकालम्वनान्नयतीति वादरायण उभयथा च दोषात् तत्क्रतुश्च

**आतिवाहिकाधिकरणम्**

५२९. आतिवाहिकास्तल्लिङ्गात्

५३०. उभयव्यामोहात् तत्सिद्धेः

**वैद्युताधिकरणम्**

५३१. वैद्युतेनैव ततस्तच्छ्रुतेः

**कार्याधिकरणम्**

५३२. कार्यं वादरिरस्य गत्युपपत्तेः

५३३. विशेषितत्वाच्च

५३४. सामीप्यात्तु तद्व्यपदेशः

५३५. कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्

५३६. स्मृतेश्च

५३७. परं जैमिनिर्मुख्यत्वात्

५३८. दर्शनाच्च

५३९. न च कार्ये प्रतिपत्त्यभिसन्धिः

५४०. अप्रतीकालम्वनान्नयतीति वादरायण उभयथा च दोषात् तत्क्रतुश्च

५३३. विशेषं च दर्शयति

इति चतुर्थाध्यायस्य तृतीयः पादः

अत्र पादे अदितः

अधिकरणानि ६ १८५

सूत्राणि १६ ५३३

अथ चतुर्थाध्यायस्य चतुर्थः पादः

सम्पद्याविर्भावाधिकरणम्

५३४. सम्पद्याऽविर्भावः स्वेनशब्दात्

५३५. मुक्तः प्रतिज्ञानात्

५३६. आत्मा प्रकरणात्

अविभागेन दृष्टत्वाधिकरणम्

५३७. अविभागेन दृष्टत्वात्

ब्राह्माधिकरणम्

५३८. ब्राह्मेण जैमिनिरुपन्यासादिभ्यः

५३९. चितितन्मात्रेण तदात्मकत्वा-
दित्यौडुलोमिः

५२३. विशेषं च दर्शयति

इति चतुर्थाध्यायस्य तृतीयः पादः

अत्र पादे अदितः

अधिकरणानि ५ १५०

सूत्राणि १५ ५२३

अथ चतुर्थाध्यायस्य चतुर्थः पादः

सम्पद्याविर्भावाधिकरणम्

५२४. सम्पद्याऽविर्भावः स्वेनशब्दात्

५२५. मुक्तः प्रतिज्ञानात्

५२६. आत्मा प्रकरणात्

अविभागेन दृष्टत्वाधिकरणम्

५२७. अविभागेन दृष्टत्वात्

ब्राह्माधिकरणम्

५२८. ब्राह्मेण जैमिनिरुपन्यासादिभ्यः

५२९. चितितन्मात्रेण तदात्मकत्वादि-
त्यौडुलोमिः

५४१. विशेषं च दर्शयति

इति चतुर्थाध्यायस्य तृतीयः पादः

अत्र पादे अदितः

अधिकरणानि ६ २१२

सूत्राणि १६ ५४१

अथ चतुर्थाध्यायस्य चतुर्थः पादः

सम्पद्याधिकरणम्

५४२. सम्पद्याविहाय स्वेन शब्दात्

मुक्ताधिकरणम्

५४३. मुक्तः प्रतिज्ञानात्

आत्माधिकरणम्

५४४. आत्मा प्रकरणात्

अविभागाधिकरणम्

५४५. अविभागेन दृष्टत्वात्

ब्राह्माधिकरणम्

५४६. ब्राह्मेण जैमिनिरुपन्यासादिभ्यः

५४०. एवमप्युपन्यासात् पूर्वभावादविरोधं
वादरायणः

**सङ्कल्पाधिकरणम्**

५४१. सङ्कल्पादेव तु तच्छ्रुतेः

५४२. अत एव चानन्याधिपतिः

**अभावाधिकरणम्**

५४३. अभावं बादरिराह ह्येवम्

५४४. भावं जैमिनिर्विकल्पामननात्

५४५. द्वादशाहवदुभयविधं बादरायणोऽतः

५४६. तन्वभावे सन्ध्यवदुपपत्तेः

५४७. भावे जाग्रद्वत्

**प्रदीपाधिकरणम्**

५४८. प्रदीपवदावेशस्तथा हि दर्शयति

५४९. स्वाप्ययसम्पत्त्योरन्यतरापेक्ष-
माविष्कृतं हि

५३०. एवमप्युपन्यासात्
पूर्वभावादविरोधं
वादरायणः

**सङ्कल्पाधिकरणम्**

५३१. सङ्कल्पादेव तच्छ्रुतेः

५३२. अत एव चानन्याधिपतिः

**अभावाधिकरणम्**

५३३. अभावं बादरिराह ह्येवम्

५३४. भावं जैमिनिर्विकल्पामननात्

५३५. द्वादशाहवदुभयविधं बादरायणोऽतः

५३६. तन्वभावे सन्ध्यवदुपपत्तेः

५३७. भावे जाग्रद्वत्

५३८. प्रदीपवदावेशस्तथा हि दर्शयति

५३९. स्वाप्ययसम्पत्त्योरन्यतरापेक्ष-
माविष्कृतं हि

५४७. चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः

५४८. एवमप्युपन्यासात् पूर्वभावादविरोधं
वादरायणः

**सङ्कल्पाधिकरणम्**

५४९. सङ्कल्पादेव च तच्छ्रुतेः

**अनन्याधिपत्यधिकरणम्**

५५०. अत एव चानन्याधिपतिः

**अभावाधिकरणम्**

५५१. अभावं बादरिराह ह्येवम्

५५२. भावं जैमिनिर्विकल्पाम्नानात्

५५३. द्वादशाहवदुभयविधं बादरायणोऽतः

५५४. तन्वभावे सन्ध्यवदुपपत्तेः

५५५. भावे जाग्रद्वत्

५५६. प्रदीपवदावेशस्तथा हि दर्शयति

५५७. स्वाप्ययसम्पत्त्योरन्यतरापेक्ष-
माविष्कृतं हि

**जगद्व्यापाराधिकरणम्**

५५०. जगद्व्यापारवर्जं प्रकरणादसन्नि-

हितत्वाच्च

५५१. प्रत्यक्षोपदेशादिति चेन्नाऽधिकारि-
कमण्डलस्थोक्तेः

५५२. विकारावर्ति च तथाहि स्थितिमाह

५५३. दर्शयतश्चैवं प्रत्यक्षानुमाने

५५४. भोगमात्रसाम्यलिङ्गाच्च

५५५. अनावृत्तिः शब्दादनावृत्तिः शब्दात्

**॥ इति चतुर्थाध्यायस्य चतुर्थः पादः ॥**

अत्र पादे आदितः

| | | |
|---|---|---|
| अधिकरणानि | ७ | १९२ |
| सूत्राणि | २२ | ५५५ |

**जगद्व्यापारवर्जाधिकरणम्**

५४०. जगद्व्यापारवर्जं प्रकरणाद-
सन्निहितत्वाच्च

५४१. प्रत्यक्षोपदेशादिति चेन्नाऽधिकारि-
कमण्डलस्थोक्तेः

५४२. विकारावर्ति च तथा हि स्थितिमाह

५४३. दर्शयतश्चैवं प्रत्यक्षानुमाने

५४४. भोगमात्रसाम्यलिङ्गाच्च

५४५. अनावृत्तिः शब्दादनावृत्तिः शब्दात्

**॥ इति चतुर्थाध्यायस्य चतुर्थः पादः ॥**

अत्र पादे आदितः

| | | |
|---|---|---|
| अधिकरणानि | ६ | १५६ |
| सूत्राणि | २२ | ५४५ |

**जगद्व्यापाराधिकरणम्**

५५८. जगद्व्यापारवर्जं

५५९. प्रकरणादसन्निहितत्वाच्च

५६०. प्रत्यक्षोपदेशादिति
चेन्नाऽधिकारिकमण्डलस्थोक्तेः

५६१. विकारावर्ति च तथाहि दर्शयति

**स्थित्यधिकरणम्**

५६२. स्थितिमाह दर्शयतश्चैवं
प्रत्यक्षानुमाने

५६३. भोगमात्रसाम्यलिङ्गाच्च

**अनावृत्त्यधिकरणम्**

५६४. अनावृत्तिः शब्दादनावृत्तिः शब्दात्

**॥ इति चतुर्थाध्यायस्य चतुर्थः पादः ॥**

अत्र पादे आदितः

| | | |
|---|---|---|
| अधिकरणानि | १ | २२३ |
| सूत्राणि | २३ | ५६४ |

# Mega Project of Poornaprajna Samshodhana Mandiram

# द्वैतकोशः

# Dvaitakośaḥ

A Kosha in Sanskrit is the equivalent to a detailed Dictionary of meanings and references to terms used for standard reference works by which a students can understand what is precisely meant by the author contextnally. The Sanskrit language is not only rich in a variety of meanings associated with the usage of words, but also has a precisely defined grammar aiding the correct interpretations. Therefore, usage of technical terms by philosopher would become unclear and imprecise, unless a Kosha is referred to by the student.

The three famous Vedanta schools in Indian Philosophy have constantly interacted with each other in the form of disputation by scholars, writings of polemical works and their refutation etc. Dvaita school which came last historically has the benefit of some the greatest thinkers and logicians, who have composed great works like Tatparya Chandrika, Nyayamruta etc. The interpretation of philosophical terms in such works though apparent to the accomplished scholar of Dvaita Vedanta, can be difficult for students. Advaita and Vishishtadvaita schools have already published their Koshas, giving a great advantage in the study and understanding of those systems. It is now necessary that the students of Dvaita Vedanta should also be provided with such a Kosha.

While undertaking this work, we intend to achieve the following objectives, by taking note of results already achieved by other Koshas and further improvements thereon :

i. The Kosha will be limited to words having special philosophical or interpretational significance. Common words which may have no special significance and are used for elaboration of meanings could be conveniently omitted.

ii. There will not only be equivalent words describing the meaning, but usage of the same word in more than one sense according to context will also be intelinked indices.

iii. The word meanings will be given in equivalent words/ descriptive sentences in Kannada and English also, in addition to Sanskrit.

iv. Descriptive annotations will be provided, when there are significant differences in the meanings of the same word/s used in different contexts by the same author/ school or by different authors/schools.

v. In each case, bibliographical references will be provided by which the student can look into the original texts where the usage/meaning is noticed along with commentaries/sub-commentaries thereon.

The Kosha which is expected to deal with approximately 500 words, will be around 500 pages, to be brought out in 3 volumes. We are refering more than 150 Dvaita Philosophical works in this Project and summary will be given. In these three volumes we complete vowels (Swaraksharas) and consonants (Vyanjana Aksharas).